ऊर्ध्वं विनिर्भिन्नवलिप्रदेशः
किञ्चिद्विहीनेन्द्रियधातुतेजाः ।
पृष्ठोष्ठकर्णादिषु जातरोमा
षष्ठीं दशां **निस्सृतदन्तमूलः** ॥ ७३

अल्पाग्निपित्तो बहु मातरिश्वा
स्तब्धाङ्गयुक्तः परुषच्छविश्च ।
अल्पाङ्गचेष्टो विकलो **विवर्णः**
प्राप्तः करी साप्तमिकीं दशां स्यात् ॥ ७४

कच्चाविलाङ्गोऽतिविवर्णकायः
कृच्छ्रव्रणो मुक्तविषाणमूलः ।
अदन्तवृद्धिर्जलपूर्णनेत्रो
नागोऽष्टमीं प्राप्य दशां न रम्यः ॥ ७५

नित्याश्रुः सततं करस्रुतकफो दुर्वर्णरूक्षच्छवि-
र्भीत्या यूथबहिश्चरः श्लथधिया दन्ताभिवृद्ध्युज्झितः ।
निर्वीर्यस्सततोपदग्धनयनः पादप्रहारव्रणः
प्राप्तस्या**द्विरवी** गजोष्ठमदशां संभिन्नरोमावलिः ॥ ७६

कच्चाविलास्यश्शिथिलाक्षियुग्मो
गुहाशयो गर्हितयूथचारः ।
विमुक्तदुर्गश्शिथिलाङ्गसन्धि-
र्दशां प्रपन्नो नवमीं गजस्स्यात् ॥ ७७

स्रस्तग्रीवः प्रचलदशनो यूथपर्यन्तसेवी
दन्तस्रावी मृदुयवसभुग्दुर्गदूरः श्लथाङ्गः ।
रूक्षच्छायो वलियुततनुर्मन्दगो मन्दनादो
निर्मोदो यः स्वपिति विषमं स्यात्पुराणो नवम्याम् ॥ ७८

विशीर्णरोमाङ्गविषाणकृच्छ्र-
मूत्रारतिः स्वल्पगतिः प्रभिन्नः ।
कृच्छ्रात्प्रयातः परितश्श्लथाङ्गः
प्राप्तः करी स्याद्दशमीं दशान्ताम् ॥ ७९

शीर्यन्ते दशनाः क्षयी च विलस (गळ) त्सर्वाङ्गरोमा चल-
दन्तो मांसबलक्षयी चलतनुः प्रस्रस्तमेदोऽल्पभुक् ।
रूक्षाङ्गः पटली सिराञ्चिततनुः कृच्छ्राच्छकृन्मूत्रकृ-
त्तृष्णालुः कृमिजालभक्षितनखो वृद्धो दशम्यां स्मृतः ॥ ८०

स्वपेच्च मन्दं प्रमृशेच्च यायात्
चलत्करो यश्चलकर्णवालः ।
प्रस्रस्तगात्रः परवानजस्रं
स द्वादशीं प्राप्य दशां करीन्द्रः ॥ ८१

आयुर्ज्ञाने वयोज्ञाने गर्भिणीज्ञान एव च ।
मुनयोऽपि च मुह्यन्ति किं पुनर्मांसचक्षुषः ॥ ८२

## ॥ अथ गजानां उत्तममध्यमाधमवयोविभागः ॥

-o——

दशसंवत्सरादूर्ध्वमाचतुर्दशमुत्तमम् ।
चतुर्दशाब्दाद्द्वात्रिंशन्मध्यमं वय उच्यते ॥ ८३

तस्मात्संवत्सरादूर्ध्वं यावत्सप्ततिवत्सराः ।
अधमं तद्वयः प्रोक्तं ततो वृद्धोऽबलो गजः ॥ ८४

## ॥ अथोत्तमादिवयोविभागफलम् ॥

-——o——

वयसि प्रथमे तस्य सर्वशिक्षाक्रमस्स्मृतः ।
मध्ये वयसि नागानां युद्धमेकं प्रशस्यते ॥ ८५

अन्ते वयसि राजेन्द्र गजान् कर्मसु योजयेत्

## ॥ अथ वैशंपायनीये वयोज्ञानम् ॥

—o—

भद्रनामयुता ये तु नागास्ते चिरजीविनः ॥ ८६

तत्पादहीनशरदो मन्दास्तेभ्योऽर्धवत्सराः ।
मृगजातिगजास्सर्वे विंशत्यग्रशतं द्विपाः ॥ ८७

सङ्कीर्णानां वयो वेदविदो जानन्ति च क्रमात् ।
वृष्टिरायुर्वयोगर्भः कल्याणं वासवध्वनिः ॥ ८८

जानन्ति मुनयो नैव जानते मानवाः कथम् ।
भद्रमन्दमृगाणां तु वयो ज्ञातुं न शक्यते ॥ ८९

तथापि लक्षणाद्भेदात्सङ्कीर्णकरिणां वयः ।
चिह्नतस्तद्विजानीयुर्योगिनश्च कथञ्चन ॥ ९०

देशप्रभेदवळिवर्णरदस्वभाव
सारांशदन्तजवमानतनूरुहाणि ।

कर्णौ मणीन्वनचरांश्च बुधा विचार्य
कृच्छ्रादिदं गजवयः कथयन्ति दक्षाः ॥ ९१

जन्मवृत्त वारणानां विदुर्वेदविदो वयः ।
विज्ञातुमनलं कृच्छ्रादन्ये विक्लबबुद्धयः ॥ ९२

स्तन्यैकपानाः प्रथमे वत्सरे गजशाबकाः ।
चतुरङ्गुलमानाश्च वाला अब्दाद्दशाब्दतः ॥ ९३

कथितैषामियं वृद्धिस्ततोऽङ्गुलयुता मता ।
त्रिंशद्वत्सरपर्यन्तं देहवृद्धिस्तु दन्तयोः ॥ ९४

स्थौल्यं चत्वारिंशदब्दपर्यन्तं दीर्घताऽपि च ।
गजानामुत्तममध्यमाधमवयसः क्रमात् ॥ ९५

भेदनिर्मातृकं ज्ञेयं कार्याकार्यं बलाबलम् ।
विंशत्संवत्सरादूर्ध्वं गजानामुत्तमं वयः ॥ ९६

तदूर्ध्वं विंशच्छरदो मध्यमं त्रिंशदब्दकाः ।
दशावस्थान्तमधमं विंशत्युत्तरकं शतम् ॥ ९७

निष्फलास्ततपरं ज्ञेया विंशद्वाल्ये मदाविलाः ।
सर्वकर्मक्रियायोग्या युद्धवर्ज्याश्च केवलम् ॥ ९८

उत्तमं मध्यमं चान्त्यं वयस्तद्वत्क्रमाद्बलम् ।
दशोपरि दशा वीर्यं विद्यादेवं च सर्वशः ॥ ९९

॥ इति गजत्रयोलक्षणं नाम पञ्चमं प्रकरणं समाप्तम् ॥



## ॥ अथ देशभेदभिन्नगजलक्षणम् ॥

काम्भोज - लाट - वरसिन्धु - वनायुजाङ्ग-
जाता विनीलसितकुम्भनखाङ्कदन्ताः ।
ह्रस्वाङ्गवालमृदुदीर्घवराण्डकोशा
नागा रजोगुणपरीतशरीरभागाः ॥ १

अनूप - वङ्गाळ - पुळिन्द - हूण -
नेपाळका - वन्ति - विदर्भजाताः ।
शोणाङ्कदन्ताननकायनेत्रा-
श्शूराः कफोद्रिक्तसुशान्तचित्ताः ॥ २

सौराष्ट्र - घूर्णिक - कलिङ्ग - यवन्त - वत्स
काश्मीरजा - स्सितमुखास्सितगण्डदेशाः ।

श्वेताङ्गजाश्च पवनाशनतामसास्ते
कन्दर्पगन्धतनुभिन्ननखाङ्कदन्ताः ॥ ३

मत्स्य - बर्बर - त्रिगर्त - मालवाः
सिन्धुजोपवनभक्षतामसाः ।
पीतलोचननखाङ्गपुष्कराः
श्वेतवामनरदान्तमेहनाः ॥ ४

सौवीर - बाह्लीक - दशार्णदेश-
जातास्तु कालागरुतुल्यगन्धाः ।
कडाररोमाननदन्तमूलाः
कफोज्ज्वलाः प्रोज्ज्वलयुद्धवीराः ॥ ५

गीर्वाण - बाहुक - मराळ - तहारदेश-
जाता विचित्रतनुभिन्ननखा भवन्ति ।
शोणाण्डपुष्करविलीननखाश्च पीत-
देहाश्च कोमलरजोगुणकर्बुराङ्गाः ॥ ६

मत्स्यराष्ट्र - करहाटक - भोट -
देशसम्भवगजास्तिलगन्धाः ।
जिह्वनीलिममनोजवशीला
दीर्घपुष्कररदास्तनुदेहाः ॥ ७

कर्णाटका - न्ध्र - मलयाळ - शकुन्त - पाण्ड्य -
पाश्चात्य - तौलवक - टङ्कण - गौडजाताः ।
नीलाङ्गशुभ्ररदनाङ्क(ःकु)नखाश्च शूरा-
स्तान्निकधा किल वदन्ति गजज्ञवृद्धाः ॥ ८

शैलाह्वया - हिरळ - सह्यक - शाल्वलेषु
ये चोद्भवन्ति शितशीतरदान्तकायाः ।
हय्यङ्गवीनरुचिरा ह्यतिसात्विकास्ते
जम्बूफलाभतनवः शुभरोमदन्ताः ॥ ९

सूक्ष्मबिन्दुरुचिराननकर्णाः
स्निग्धताम्रनयनास्तनुदन्ताः ।
चेतसो हितकराः सितदन्ताः
केरळान्तविषयोद्भवनागाः ॥ १०

श्वेताश्च नखदन्तेषु चञ्चुमल्लसमुद्भवाः ।
कार्णरोमा दीर्घकेशा भिन्नदन्तान्तराः कृशाः ॥ ११

स्वस्थानयुद्धधीरास्ते कृपणा मदसंस्थिताः ।
सङ्गरे चकितास्ते तु नागास्स्युर्नीरसप्रभाः ॥ १२

कुरुदेश्याश्शौरसेनाः कुकुरे सम्भवास्समाः ।
महाजवबलाः शूराः सदा रोषोत्तरा गजाः ॥ १३

ते च जाङ्गलजा धीराः शितदीर्घकचास्स्मृताः ।
अनूपजाः पित्तदेहा ह्रस्वाश्चामन्दमेहनाः ॥ १४

॥ इति देशभेदभिन्नगजलक्षणं समाप्तम् ॥

## ॥ अथ गजग्रहणप्रकारः ॥

करिणो मूत्रशकृता लिप्ताङ्गैरटवीचरैः ।
अरुष्करदळच्छन्नैर्जानीयाद्गजयूथकम् ॥ १५

पादप्रचारलिङ्गैश्च तदाघातहतद्रुमैः ।
बुध्यन्ते शयनस्थानैर्गजास्तद्बृंहितैरपि ॥ १६

इत्याह भगवान् व्यासो गजानां मार्गलक्षणम् ।
करिणीतुरगारूढैर्मन्त्रिभिर्बहुभिर्वृतः ॥ १७

परिकर्मयुतः पादपाशजालैस्समन्वितः ।
समादिष्टः क्षितीशेन करिलक्ष्मविचक्षणः ॥ १८

द्विरदान्धारयेद्ग्रीष्मे यत्नतो लक्षणान्वितान् ।
धारयेत्त्रिविधैर्बन्धैर्द्विपान्हस्तिपकादिभिः ॥ १९

पार्थिवेन विधातव्यः पुरुषैर्बन्धवेदिभिः ।
वारिबन्धो वशाबन्धो बन्धश्चानुगतः परः ॥ २०

उत्तमास्त्रिप्रकारस्स्याद्बन्धः करांटनामयम् ।
आपातश्चावापातश्च द्वौ बन्धौ निन्दितौ मतौ ॥ २१

विनश्यन्ति गजा यस्मात्तस्मात्तौ परिवर्जयेत् ।
वारिस्थानं समालोक्य घासं हृद्यं ततः क्षिपेत् ॥ २२

सल्लकी कदळीदण्डानिक्षुदण्डान्सुधासमान् ।
नळिनीकन्दकान्मृष्टान्प्रियाळान्पिप्पलानपि ॥ २३

वैणवं हरितं पत्रं तथैवान्यद्गजप्रियम् ।
द्विपो यूथैस्समागच्छेद्गच्छेच्च ग्रासलम्पटः ॥ २४

प्रत्यहं दृश्यते तत्र तदा मार्गो निरुध्यते ।
क्रोशमात्रायतां भूमिं विस्तारेण च तत्समाम् ॥ २५

वृक्षैः परिघया वापि समन्तात्परिवेष्टयेत् ।
द्वारं तत्र प्रकुर्वीत निवर्तनमहीमितम् ॥ २६



प्रशस्तगजग्रहणविधिः ।

The proper mode of catching Elephants



अप्रशस्तगजग्रहणविधिः ।

The improper mode of catching Elephants

कुञ्जराणां प्रवेशार्थं वारिबन्धविचक्षणः ।
प्रविष्टान्द्विरदांस्तत्र सम्यगालोच्य बुद्धिमान् ॥ २७

वारिद्वारं निरुन्धीत महावृक्षैस्तिरस्कृतम् ।
अन्तस्स्थान्बन्धयेन्नागान्सर्वलक्षणसंयुतान् ॥ २८

ईदृग्विधस्तु यो बन्धः **वारिबन्धस्स** उच्यते ।
इत्याह भगवान् **व्यासो** वारिबन्धविचक्षणः ॥ २९

॥ इति वारिबन्धस्समाप्तः ॥

## ॥ अथ वशाबन्धः ॥

सप्ताष्टौ वा वशा वश्या महाकाया महाजवाः ।
आरूढाः पत्रसञ्छन्नाः पाशहस्ताश्च हस्तिपाः ॥ ३०

करिणीनां करे पाशान्हस्तिबन्धाय दापयेत् ।
प्रबध्य कुञ्जरान्राजा तेषां लक्षणमुन्नयेत् ॥ ३१

॥ इति वशाबन्धस्समाप्तः ॥

## ॥ अथानुगतबन्धः ॥

—o—

वशां यत्रानुयाति स्म करी मोहसमन्वितः ।
बन्धस्सोऽनुगतो ज्ञेयो गजबन्धविचक्षणैः ॥ ३२

॥ इत्यनुगतबन्धः समाप्तः ॥



## ॥ अथ आपातावपातबन्धः ॥

—o—

आपात ईषत्पातस्तु सल्लकी कदळीयुते ।
गर्ते गजस्य विज्ञेयो गजबन्धविचक्षणैः ॥ ३३

अवपातस्तु तत्रैव गजस्यात्यन्तपातनम् ।
निन्दितौ द्वावमू बन्धौ तस्मात्तौ परिवर्जयेत् ॥ ३४

॥ इत्यापातावपातबन्धः समाप्तः ॥



## ॥ अथ आलानबन्धनमन्त्रः ॥

——o——

आलानीयः ततस्स्तम्भे मन्त्रेणानेन वारणः ।
यथापूर्वं स्वशालायां कीर्तिशौर्यप्रतापवान् ॥ ३५

अनिरुद्ध प्रविश्य त्वं स्तम्भे तिष्ठ शरच्छतम् ।
आरोग्यबलवान् भूयो गजश्च विजयावहः ॥ ३६

इति देशभेदभिन्नगजलक्षणगजग्रहणकथनं नाम
षष्ठं प्रकरणं समाप्तम् ॥

## ॥ अथ भद्र - मन्द - मृग - सङ्कीर्णगजलक्षणम् ॥

——o——

धैर्यं शौर्यं पटुत्वं च विनीतत्वं सुकर्मता ।
अन्वर्थवेदिता चैव भयरूपेष्वमूढता ॥ १

सुभगत्वं च वीरत्वं भद्रस्यैते गुणास्स्मृताः ।
तेजोंशकत्वाद्भद्रस्य नवपूगफलप्रभः ॥ २

कृते कामप्रचारस्तु कामरूपधरा गजाः ।
त्रेतायां द्वापरेऽन्यत्र वाहनत्वेन योजिताः ॥ ३

त्रेतायां तद्गुणे किञ्चिन्मन्दत्वान्**मन्द** उच्यते ।
द्वापरेऽपि च ते सर्वे गच्छन्ति मृगतां यतः ॥ ४

ततस्तत्र समुत्पन्नो **मृग** इत्यपि गीयते ।
कलौ तद्गुणसाङ्कर्यात्**सङ्कीर्ण** इति कथ्यते ॥ ५

कृते भद्रगुणास्सर्वे भवन्ति करिणो यतः ।
ततस्तत्र समुद्भूतो **भद्र** इत्यभिधीयते ।
जायते समदोद्गारो भद्रनामा मतङ्गजः ॥ ६

## ॥ अथ भद्रादिगजप्रमाणम् ॥

—— ० ——

नवाष्टौ सप्त चायामाः सप्तषट् पञ्च चोच्छ्रयाः ।
नाहा दश नवाष्टौ च भद्रमन्दमृगाः क्रमात् ॥ ७

## ॥ अथ भद्रजातिगजलक्षणम् ॥

—— ० ——

अत्युन्नतस्थूलसुवृत्तकुम्भो
विस्तीर्णकर्णः कलविङ्कनेत्रः ।
स्निग्धच्छविर्वक्त्रकरोरुदन्तो
रक्तोत्पलाकारकराङ्गुलीकः ॥ ८

कोदण्डसंस्थाननिमग्नवंशो
विशालवालस्सुविभक्तकायः ।
वराहजङ्घो द्विगुणीकृतार्ध-
हस्ताग्रसंस्पृष्टमहीतलश्च ॥ ९

आताम्रतालुः पृथुपीनकण्ठो
घनाकृतिर्बिन्दुविचित्रवक्त्रः ।
दक्षो बली कर्कश उत्तमाङ्ग
सम्यक् समुत्तुङ्गवपुर्विनीतः ॥ १०

सम्पूर्णसन्धिः पृथुपुष्कराक्षः
समुन्नतश्शूरतरस्तरस्वी ।
प्रतिद्विपालोकनदृश्यमान-
दानद्रवो **भद्रमतङ्गजः** स्यात् ॥ ११

वैय्यासिक्ये —

गात्रापरं करः पुच्छं न स्थूलं न भवेत्समम् ।
विशालमुन्नतं वक्षो धनुराकारवंशकः ॥ १२

अत्युन्नतस्थूलकुम्भौ कटौ चापि प्रवेश(ष्ट)कौ ।
स्थूलदन्ता भवन्तीह विपुलं चरणासनम् ॥ १३

वराहजघनश्चैव छागकुक्षिर्मनोहरः ।
समाः स्निग्धा नखा दन्ता लोचने मधुपिङ्गले ॥ १४

गौरवर्णो ह्युदग्रश्च लब्धबिन्दुविराजितः ।
आतालुताम्रजिह्वोष्ठो ह्येतद्भद्रस्य लक्षणम् ॥ १५

वनयूथस्य पुरतो यात्याहारविहारयोः ।
मेघभेरीस्वनाद्भीतिं नैति गच्छत्यनाकुलम् ॥ १६

समानीतो वनात्कर्मकाले सोऽत्यर्थवेदनः ।
आशुग्राही सुशीलश्च न विस्मरति शिक्षितम् ॥ १७

कर्मशूरस्स्वयं शूरो भूपलक्षणसंयुतः ।
ईदृशो **भद्रजातिः** स्यात्कुञ्जरो विजयावहः ॥ १८

## ॥ अथ अनुभद्रजातिगजलक्षणम् ॥

—o—

न कृशा न चोपदिग्धा
मधुनिभदन्तेक्षणा धनुर्वंशाः ।
समवृत्तगात्रसुभगा
ह्यनुभद्रास्ते गजा ज्ञेयाः ॥ १९

गज जातयः – Species of Elephants



1. भद्रजातिः – 'Bhadra' Species.



2. मन्दजातिः – Manda Species.



3. मृगजातिः – Mrga Species

## ॥ अथ मन्दजातिगजलक्षणम् ॥

—— o ——

विपुलतरकर्णवदना
**महोदराः** स्थूलपेचकविषाणाः ।
बहुलबललम्बमांसा
हर्यक्षाः कुञ्जरा **मन्दाः** ॥ २०

ग्रन्थान्तरे —

स्थूलगात्राः पटुश्रोत्रा दृढदन्तनखोदराः ।
चलप्रलम्बसम्भूतमांसाः सिंहावलोकनाः ॥ २१

दौर्मनस्यं तथाऽऽलस्यं निद्रालुत्वं च मूढता ।
गम्भीरवेदिता चैवं दुष्टत्वं च **तमोगुणाः** ॥ २२

मन्दयानं मतं सर्वं शुभकर्मसु पूजितम् ।
आरोहणं मन्दनाम्नो मातङ्गस्य मनोहरम् ॥ २३

तरुणाम्बुदसङ्काशो रूक्षकृष्णकचाविलः ।
श्लेष्मसंसृष्टपित्तासृङ्मिथुनप्रभवो गजः ॥ २४

वैय्यासिक्ये —

उरोमुखं तथा कर्णौ विशालानि भवन्ति हि
वालधिः पृष्ठवंशश्च विशालो हस्त एव च ॥ २५

भवन्त्येतानि दीर्घाणि लम्बमेढ्रस्सुकोशकः ।
भेककुक्षिसमाकुक्षिर्लोचने कपिले शुभे ॥ २६

कृष्णमेघनिभो वर्णः सर्वाङ्गपरिपीनता ।
जाड्यं च बलबाहुल्यमिदं **मन्दस्य** लक्षणम् ॥ २७

वनेषु वसतस्तस्य शशादेर्यद्भयं भवेत् ।
न हृष्यति भवत्येको निद्रालुः सततं भवेत् ॥ २८

शिक्षाकाले च तस्यैतल्लक्षणं परिदृश्यते ।
गम्भीरवेदनं तस्य कर्म शीघ्रं प्रदृश्यते ॥ २९

शिक्षितं विस्मरत्याशु मत्तः स्मरति शिक्षितम् ।
मन्दकोपो गतौ स्तब्धो **मन्दो** मातङ्ग ईदृशः ॥ ३०

स्निग्धच्छविः सिह्मसमानदृष्टि-
नवाम्बुदश्यामसमुत्तमाङ्गः ।
अधोमुखः स्थूलबृहत्सुदन्तो
लम्बोदरो दीर्घललाटपट्टः ॥ ३१

## ॥ अथ मृगजातिगजलक्षणम् ॥

— o —

वैशम्पायनीये —

कृशकरचरणग्रीवाः
स्थूलाक्षा ह्रस्ववालमेढ्रोष्ठाः ।
संक्षिप्तपृष्ठवंशाः
तनुमुखदन्ता **मृगा** ज्ञेयाः ॥ ३२

नाहायामप्रहीणः कृशनिखिलतनुर्धूसरच्छायदेहो
जिह्मो ह्युत्तानवेदी चपलगतिमतिः क्रोधनः सिन्धुचारी ।
स्थूलास्यो द्वापरस्थः शुभजनिरलसो राजसो ह्रस्ववालः
चण्डः पित्तप्रधानो **मृग** इति गदितो दीर्घदन्तः सुगात्रः ॥ ३३

ग्रन्थान्तरे —

तेजस्विता च चण्डत्वं चपलत्वं तथैव च ।
शीघ्रता क्षीणसत्वं च तथैवोत्तानवेदिता ॥ ३४

मलिनाम्बरसङ्काशा रूक्षताम्रतनूरुहाः ।
**मृगजाः** पित्तसंसृष्टशुक्रशोणितसम्भवाः ॥ ३५

पालकाप्ये —

कृशाङ्गुलीवालधिवक्त्रमेढ्रो
लघूदरः क्षामकपोलकण्ठः ।
विस्तीर्णकर्णस्तनुदीर्घदन्तः
स्थूलेक्षणो यस्य गजो **मृगाख्यः** ॥ ३६

वैय्यासिक्ये —

गात्रपादनखा दन्तौ कोशो मध्यं करो गळः ।
तनून्येतानि दीर्घाणि शीर्षं पृष्ठं च वालधिः ॥ ३७

कपोलौ चुबुकं चैव ह्रस्वानि च भवन्ति हि ।
समदौ च कटौ कुक्षिः कर्णौ च तनुकौ भृशम् ॥ ३८

अङ्गुली हनुकेशाश्च वक्षः कुब्जः प्रदृश्यते ।
यस्य श्यामो भवेद्वर्णः स्वच्छे स्थूले च लोचने ॥ ३९

आकार ईदृशः प्रोक्तो वनचारस्तु कथ्यते ।
एकाकी प्रचरत्येव गोप्रचारं च गच्छति ॥ ४०

पथानुवर्ती भीरुश्च चलच्चित्तो वने **मृगः** ।
धृतस्य कर्मकाले तु भवेदुत्तानवेदिता ॥ ४१

दुश्शीलता च चापल्यं लक्षयेन्मृगदन्तिनः ।

## ॥ अथ सङ्कीर्णजातिगजलक्षणम् ॥

—— o ——

मिश्रस्तूभयसंयोगे सङ्कीर्णस्त्रिगुणो मतः ॥ ४२

धृतो धावति चात्यर्थं प्रगतिस्तु न गच्छति ।
प्रत्यर्थवेदी विज्ञेयो व्याळो मिश्रगजो मतः ॥ ४३

भद्रमन्दो भद्रमृगो मन्दभद्रस्तथाऽपरः ।
मन्दो मृगो मृगो मन्दो मृगभद्रश्च मिश्रकः ॥ ४४

भद्रमन्दमृगश्चैको मन्दो वा मृगभद्रयोः ।
मृगो भद्रश्च मन्दश्च सङ्कीर्णाः कीर्तिता गजाः ॥ ४५

ऊर्ध्वाधः कायभेदेन तत्पुनर्भिद्यते द्विधा ।
एवमष्टादशविधं कीर्तितं मिश्रलक्षणम् ॥ ४६

राजन् कलियुगे नित्यं मिश्रा एव महागजाः ।
शुभाशुभविभागेन साम्प्रतं निगदाम्यहम् ॥ ४७

गुणाधिक्येन नामैषां वर्णाद्वा मुखलक्षणात् ।
मिश्रसङ्कीर्णजातीनां नामलक्षणमीदृशम् ॥ ४८

मिश्राणां मिश्रचारस्तु सङ्कीर्णानां तथाह्वयः ।
शुद्धसङ्कीर्णमिश्राणां नाम तादृशमीरितम् ॥ ४९

## ॥ अथ भद्रमन्दमिश्रगजलक्षणम् ॥

-o--

भद्रजातिर्महाकायो राजन् भवति दन्तिनाम् ।
महान् मन्दो मतो येन संयुक्तो भवति द्विपः ॥ ५०

भद्रेण पूर्वकायेन मन्देनापरकेण च ।
उत्तमस्तु गजानां हि **भद्रमन्दो** भवेद् गजः ॥ ५१

## ॥ अथ भद्रमृगमिश्रगजलक्षणम् ॥

--o-

मृगस्यापि हि रूपेण किञ्चित्साम्यगतेन वा ।
अशुभत्वं न भद्रस्य जायते शुभदो हि सः ॥ ५२

कायेन यो भवेद्भद्रो मन्दो वापि मतङ्गजः ।
**मृगगात्रापर**श्चैव स भवेद्भगवान् गजः ॥ ५३

लोचनानां प्रधानत्वं यस्माच्छास्त्रेषु कीर्तितम् ।
तस्मान्मृगाक्षसंयुक्तो भद्रोऽपि हि न शस्यते ॥ ५४

## ॥ अथ मन्दभद्रमिश्रगजलक्षणम् ॥

—— o ——

अनेनैव हि रूपेण विपर्यस्तेन यो द्विपः ।
सोऽपि शोभन एव स्यात् **मन्दभद्र** इति स्मृतः ॥ ५५

## ॥ अथ मन्दमृगमिश्रगजलक्षणम् ॥

—— o ——

मन्दावयवबाहुल्ये मृगरूपस्य लेशतः ।
भद्रावयवनिर्मुक्तो मध्यमः स गजो भवेत् ॥ ५६

## ॥ अथ मृगमन्दमिश्रगजलक्षणम् ॥

मृगादिरूपसत्वं च दृश्यते यस्य हस्तिनः ।

अधमस्तु स विज्ञेयः सत्वशक्तिविवर्जितः ॥ ५७

भद्रमन्दो भवेच्छ्रेष्ठो **मृगमन्द**स्तथाऽधमः ।

## ॥ अथ मृगभद्रमिश्रगजलक्षणम् ॥

—— o ——

तथैव **मृगभद्रो**ऽपि हीन एव न संशयः ॥ ५८

करदन्ताक्षिकुम्भैस्तु यो मृगो ज्ञायते गजः ।
शेषावयवभद्रोऽपि हीन एव भवेदसौ ॥ ५९

## ॥ अथ भद्रमन्दमृगसङ्कीर्णगजलक्षणम् ॥

—o—

भद्रमन्दमृगाकारसंयुक्तो मध्यमो भवेत् ।
कायेन यो भवेद्भद्रो मन्दोऽपि च मतङ्गजः ॥ ६०

## ॥ अथ मन्दमृगभद्रसङ्कीर्णगजलक्षणम् ॥

—o—

मन्दावयवबाहुल्यं मृगरूपस्य चैकतः ।
भद्रावयवसंयुक्तो मध्यमस्स गजो भवेत् ॥ ६१

## ॥ अथ मृगभद्रमन्दसङ्कीर्णगजलक्षणम् ॥

—o—

मृगादिरूपसत्वञ्च दृश्यते यस्य हास्तिनः ।
अधमस्तु स विज्ञेयः सत्वशक्तिविवर्जितः ॥ ६२

करदन्ताक्षिकुम्भैस्तु यो मृगो ज्ञायते गजः ।
शेषावयवभद्रादिर्हीन एव भवेदसौ ॥ ६३

## ॥ अथ ऊर्ध्वभद्राधोमन्दमिश्रगजलक्षणम् ॥

—o—

भद्रजातिर्महाकायो राजन् भवति दन्तिनाम् ।
महान्मन्दो यतो येन संयुक्तो भवति द्विपः ॥ ६४

भद्रेणोपरिकायेन मन्देनाधोगतेन च ।
उत्तमस्तु गजानां हि भद्रमन्दो भवेद्गजः ॥ ६५

## ॥ अथ ऊर्ध्वभद्राधोमृगमिश्रगजलक्षणम् ॥

—o—

मृगस्यापि हि रूपेण किञ्चित् साम्यगतेन वा ।
अशुभत्वं न भद्रस्य जायते शुभदो हि सः ॥ ६६

## ॥ अथ ऊर्ध्वमन्दाधोभद्रमिश्रगजलक्षणम् ॥

—o—

अनेनैव तु रूपेण विपर्यस्तेन वा द्विपः ।
सोऽपि शोभन एव स्यान्मन्दभद्र इति स्मृतः ॥ ६७

## ॥ अथ ऊर्ध्वमन्दाधोमृगमिश्रगजलक्षणम् ॥

——o——

मन्दावयवबाहुल्ये मृगरूपस्य लेशतः ।
भद्रावयवनिर्मुक्तो मध्यमस्स गजो भवेत् ॥ ६८

## ॥ अथ ऊर्ध्वमृगाधोमन्दमिश्रगजलक्षणम् ॥

——o——

मृगादिरूपसत्वं च दृश्यते यस्य हस्तिनः ।
अधमस्तु स विज्ञेयः सत्वशक्तिविवर्जितः ॥ ६९

## ॥ अथ ऊर्ध्वमृगाधोभद्रमिश्रगजलक्षणम् ॥

——o——

करदन्ताक्षिकुम्भैस्तु यो मृगो ज्ञायते गजः ।
शेषावयवभद्रोऽपि हीन एव भवेदसौ ॥ ७०

## अथ ऊर्ध्वभद्राधोमन्दमृगसङ्कीर्णगजलक्षणम् ॥

——o——

भद्रमन्दमृगाकारसंयुक्तो मध्यमो भवेत् ।
ऊर्ध्वकायेन यो भद्रो मन्दोऽपि च मतङ्गजः ॥ ७१

मृगगात्रमधोभागे स भवेद्वेगवान् गजः ।

## ॥ अथ ऊर्ध्वमन्दाधोमृगभद्रसङ्कीर्णगजलक्षणम् ॥

—— o ——

मन्दावयवबाहुल्यं मृगरूपस्य चैकतः ॥ ७२

भद्रावयवसंयुक्तो मध्यमः स गजो भवेत् ।

## ॥ अथ ऊर्ध्वमृगाधोभद्रमन्दसङ्कीर्णगजलक्षणम् ॥

—— o ——

मृगादिरूपसत्वं च दृश्यते यस्य हस्तिनः ॥ ७३

अधमस्तु स विज्ञेयः सत्वशक्तिविवर्जितः ।
करदन्ताक्षिकुम्भैस्तु यो मृगो ज्ञायते गजः ।
शेषावयवभद्रादिहीन एव भवेदसौ ॥ ७४

इति भद्र - मन्द - मृग - सङ्कीर्ण - गज - लक्षणं नाम
सप्तमं प्रकरणं समाप्तम् ॥

## ॥ अथ ब्रह्मांशादिगजलक्षणम् ॥

—o—

सयुक्तांबिन्दवो यस्य गौरवर्णो मनोहरः ।
लोहितौ नेत्रयोः प्रान्तौ स्निग्धौ च बलिनौ रदौ ॥ १

एवं लक्षणसंयुक्तो गजो **ब्रह्मांशको** मतः ।
पूजार्होऽसौ नरेन्द्राणां विजयारोग्यवर्धनः ॥ २

इत्याह भगवान् **व्यासो ब्रह्मांशगज**लक्षणम् ।
कक्षभागे तथा कण्ठे यः समः पृथुलांसयोः ॥ ३

मुखे कोकनदच्छायो युग्मरोमविराजितः ।
बहुकालमदः शूरो मेघनादेन हृष्यति ॥ ४

**प्रजापत्यंशको** नागः प्रजावृद्धिं करोत्यसौ ।
बिन्दवो बहुरेखा वा दृश्यन्ते यस्य वर्ष्मणि ॥ ५

स्वस्तिकैर्वर्धमानाब्जैर्नन्द्यावर्तैश्च सन्निभः ।
रक्तोत्पलसमे नेत्रे यः स्या**दिन्द्रांशको** गजः ॥ ६

समरे विजयं दद्यात् परभूपालसम्पदाम् ।
ताम्रावोष्ठौ तथा जिह्वा धात्रीफलसमद्युतिः ॥ ७

नयने रदनौ यस्य कुङ्कुमोद्रेकसन्निभौ ।
**धनदांश** इति ख्यातो धनरत्नसमृद्धिमान् ॥ ८

नृपाणां भवने तिष्ठन् पूजितः कुञ्जरोत्तमः ।
कृष्णमधानिभा वर्णः स्त्यानसर्पिर्मदस्रवः ॥ ९

आसने सुभगो मूर्ध्नि गम्भीरो घनगर्जितः ।
स्रवति प्रचुरं दानं **वरुणांशक**कुञ्जरः ॥ १०

आहव रिपुसंहारी निजभत्र जयप्रदः ।
त्रिवलीमण्डितः कण्ठे क्षौद्रपिङ्गळलोचनः ॥ ११

केतकच्छायदशनः पृथुरक्ताग्रपल्लवः ।
बिन्दुमान् पाण्डुवर्णश्च **शशाङ्कांशक**सम्भवः ॥ १२

सङ्गरप्राङ्गणे राज्ञां गजोऽयं विजयप्रदः ।
अग्निज्वालासदृग्रोमा केशवालेषु पिङ्गळः ॥ १३

पिङ्गाक्षः पिङ्गतालुश्च पिङ्गपुष्करशोभितः ।
**अग्न्यंशक**समुद्भूतः साक्षाद्वह्निरिवाहवे ॥ १४

भस्मसात्कुरुते सैन्यमशेषं द्विषतां सदा ।
दोषाभासो गुणस्तस्य सञ्जाते समरोत्सवे ॥ १५

प्रचण्डत्वाद्भयं धत्ते रिपुसैन्येष्वयं गजः ।

## ॥ अथ विष्णवंशगजलक्षणम् ॥

—o—

दन्तमध्यात् समारभ्य क्रमशो हीयते करः ॥ १६

ताम्रपुष्करपर्यन्तः सुप्रमाणायताङ्गुलिः ।
सुगन्धिसीकरासारो दीर्घनिःश्वाससन्ततिः ॥ १७

घनवद्बृंहितध्वानो वलिहीनवपुर्दृढम् ।
मृदुसूक्ष्माञ्जनश्यामं सर्वाङ्गीणतनूरुहम् ॥ १८

श्रीगर्भपुष्करच्छाया कान्तिः सर्वाङ्गसङ्गिनी ।
सुवर्णकेतकोद्योतौ रदनौ वर्तुळौ दृढौ ॥ १९

आयतः प्रान्ततो मध्ये निम्नः स्याद्वृत्तकुम्भकः ।
आयतो रोमवानोष्ठः समदौ च कटौ शुभौ ॥ २०

मुखमण्डलमत्यर्थं रम्यं दृष्टिमनोहरम् ।
पुष्पसारसमे नेत्रे पाटले प्रान्तलोहिते ॥ २१

बलिनौ मृदुविस्तीर्णौ समौ च्छेदविवर्जितौ ।
शिराविरहितौ कर्णौ ताळदुन्दुभिनिस्वनौ ॥ २२

वर्तुळावुन्नतौ कुम्भौ समौ लक्ष्मीकुचोपमौ ।
रम्यौ फालतलन्यासौ विपुलञ्चासनं समम् ॥ २३

ऋजुह्रस्वो गळोद्देशो दीर्घावंसौ च मांसळौ ।
बाहू दीर्घावृजू पीनावधोधः क्रमशः शुभौ ॥ २४

कूर्माकारतलालान(ताम्र)स्निग्धार्धेन्दुनिभा नखाः ।
विंशतिर्वा दशाष्टौ वा शोभनाः परिकीर्तिताः ॥ २५

उरो विशालं सद्वृत्तमुदरं प्रतनू कुचौ ।
अस्रस्तं मेहनं शस्तं वराहजघनं परम् ॥ २६

सज्जचापनिभो वंशो वालधिश्चायतः शुभः ।
शङ्खचक्रगदाकारबिन्दवो वलयोऽथवा ॥ २७

दृश्यन्ते यस्य नागस्य स **विष्णवंशसमुद्भवः** ।
अभिषेकोचितः पूज्यः सर्वकार्यप्रसाधकः ॥ २८

॥ इति ब्रह्माद्यंशसमुद्भवगजलक्षणं समाप्तम् ॥



## ॥ अथ यज्ञार्हगजलक्षणम् ॥

—o—

दीर्घाङ्गुलिकरोदग्रसान्द्रकर्णायताननः ।
जीमूतनीलः सत्वाढ्यो निःशङ्कश्चारुदर्शनः ॥ २९

यज्ञार्हः स भवेद्राज्ञो योऽज्ञश्चैव विशाम्पते ।

## ॥ अथ साङ्ग्रामिकगजलक्षणम् ॥

—o—

रक्तस्रोतोऽधिकजवः शतवर्षाणि जीवति ॥ ३०

साङ्ग्रामिकः स राज्ञो वै कोशवर्धनकारकः ।
मधुनो घृतपिण्डस्य गोमेदस्य मणेस्तथा ॥ ३१

आदित्यस्यानलस्यापि सवर्णे यस्य चक्षुषी ।
स एव वारणो राजन् समरेषु जयावहः ॥ ३२

## ॥ अथ वर्णगजलक्षणम् ॥

—o—

त्रयः शुद्धा महाराज व्यामिश्रास्त्रय एव हि ।
अन्तर्वर्णास्त्रयश्चापि नागानां परिकीर्तिताः ॥ ३३

हरी रक्तश्च कृष्णश्च मातङ्गानाममी त्रयः ।
शुद्धवर्णा इमे प्रोक्ता गजशास्त्रविशारदैः ॥ ३४

त्वग्रोमनखवालान्तवर्णैः स्याद्वर्णलक्षणम् ।
कफात्तु शुभदः श्वेतः पित्ताच्च रक्तसम्भवः ॥ ३५

कृष्णो दन्ती वातजातो गजविद्भिः प्रकीर्तितः ।
हरिकृष्णः श्वेतरक्तः कृष्णरक्तस्तथैव च ।
त्रय एते महाराज वर्णास्स्युर्मिश्रसंज्ञिकाः ॥ ३६

ग्रन्थान्तरे —

अन्ये चारुण - पीत - काळ - धवलै - र्वर्णैश्चतुर्धा क्रमात्
कृष्णो वातभवः कफाच्छशिनिभः पित्ताच्च हेमप्रभः ।
अन्ये ते कफवातपित्तगुणकैर्व्यामिश्रवर्णा गजाः
जायन्ते जननाथ सम्मदकराः जात्या जगत्याममी ॥ ३७

अन्तर्वर्णास्त्रयः प्रोक्ता अन्तः पाण्डरलोहितः ।
अन्तः पाण्डरकृष्णश्च तथाऽन्तर्लोहितासितः ॥ ३८

ग्रन्थान्तरे —

श्वेतपीतौ रक्तकृष्णौ इति वर्णश्चतुर्विधः ।
हरिः कुङ्कुमवर्णाभः पद्माभो रक्त एव च ॥ ३९

कृष्णाञ्जननिभश्चैव व्यामिश्राख्यो गजो मतः ।
भवन्ति शङ्ख - वैडूर्य - विद्युज्जाल - घनप्रभाः ॥ ४०

इन्द्रनीलसमाभाश्च हरितालनिभाश्च ये ।
अतिस्निग्धाश्च रक्ताश्च कुशपुञ्जसमप्रभाः ।
इति दिग्दन्तिनस्सर्वे भूतले न भवन्ति ते ॥ ४१

॥ इति वर्णगजलक्षणं समाप्तम् ॥

## ॥ अथ छायागजलक्षणम् ॥

**पार्थिवी चौदकी** चैव छायाऽऽ**ग्नेयी** च शोभना ।
**वायव्या** निन्दिता छाया **नाभसी** च मतङ्गजे ॥ ४२

गम्भीरा स्निग्धवर्णा च नैकवर्णा च **पार्थिवी** ।
स्निग्धनीलाम्बुदप्रख्या विज्ञेया **सलिलात्मिका** ॥ ४३

शक्रगोपक - बालार्क - पद्मकिञ्जल्कसन्निभा ।
छायाऽऽ**ग्नेयी** घना स्निग्धा कुञ्जरे दृश्यते शुभा ॥ ४४

निष्प्रभा परुषा ध्वस्ता भस्मवर्णा च वायवी ।
निन्द्या च नियतं छाया रूक्षा तन्वी च खात्मिका ॥ ४५

इत्येषा पञ्चधा छाया वारणेषु प्रदृश्यते ।
पार्थिवी राज्यलाभाय चाम्भवी तु यशःप्रदा ।
तैजसी धनदा प्रोक्ता दुःखाकीर्तिप्रदे परे ॥ ४६

॥ इति गजच्छायालक्षणं सम्पूर्णम् ॥



## ॥ अथ गजगन्धलक्षणम् ॥

अथ गन्धं प्रवक्ष्यामि नागानां तु शुभाशुभम् ।
स्वेदे मदे वा मूत्रे वा वमथौ वाऽपि लक्ष्यते ॥ ४७

शुभस्तु सुरभिर्गन्धो दुर्गन्धस्त्वशुभः स्मृतः ।
उशीर - घृत - लाजा - ब्ज - जाती - पाटलजाः शुभाः ॥ ४८

गन्धाः प्रोक्ता महीपाल गजानां गजचिन्तकैः ।
बस्तगन्धो मार्गगन्धः शल्यकस्य च गन्धकः ॥ ४९

यश्च श्वपचगन्धः स्यात्तथा वायसगन्धकः ।
निन्द्यगन्धसमायुक्तो निन्द्यः प्रोक्तो मतङ्गजः ॥ ५०

इति वाह्यान् समुद्दिष्टान् गन्धज्ञानेन हस्तिनः ।
पुण्यान् पूजितसर्वाङ्गान् प्रशस्तांच्छृणु तत्त्वतः ॥ ५१

मत्स्यगन्धी च यो नागः सुरागन्धी च यो भवेत् ।
**गन्धर्व** इति निर्दिष्टो गन्धविज्ञैर्महीपते ॥ ५२

जात्या **यक्षो** भवेन्नागोऽशोकमालतिगन्धकः ।
सिन्धुवारागरुतरुसगन्धि**दानवः** स्मृतः ॥ ५३

पद्मगन्धी च यो नागः कुरण्टस्योत्पलस्य च ।
सप्तच्छदसगन्धी च **देवजातिः** प्रकीर्तितः ॥ ५४
इति गन्धसमुद्देशः कीर्तितस्ते महीपते ।

॥ इति गजगन्धलक्षणं सम्पूर्णम् ॥



## ॥ अथ गजसत्वपरीक्षा ॥



गुरुत्वं रूपतः श्रेष्ठं गुरुत्वादधिकं बलम् ॥ ५५

बलादप्यधिकं सत्वं तस्मात्सत्वं परीक्षयेत् ।
शुद्धस्फटिकसङ्काशं सत्वं हृदि शरीरिणाम् ॥ ५६

दुर्लभं तत्परिज्ञानमुपायेन परीक्षयेत् ।
जाम्बूनदस्य ताम्रस्य पलानां रजतस्य च ॥ ५७

अष्टादशसहस्राणां भारं सङ्ग्राह्य वेगवान् ।
यो गजो गजमध्येन गच्छति श्रमवर्जितः ॥ ५८

दशयोजनमध्वानं **सतूत्तमबलः** स्मृतः ।
यश्चतुर्दशसाहस्रं भारमादाय गच्छति ॥ ५९

सप्तयोजनमध्वानं स तु **मध्यबलः** स्मृतः ।
दशसाहस्रिकं भारं गृहीत्वा पञ्चयोजनम् ॥ ६०

अध्वानं यो गजो यायात्स **हीनबल** उच्यते ।
पाषाणैरिष्टकाभिर्वा दारवैः फलकैर्घनैः ॥ ६१

सुसङ्कल्पितमूलैस्तु कारयेच्च समं स्थलम् ।
उच्छ्रायेण त्रिहस्तं स्यादायामेन चतुर्दश ॥ ६२

हस्ताष्टकं पृथुत्वेन परितो धृतकर्णिकम् ।
बाणपातद्वयायामपार्श्वसारितभूतलम् ॥ ६३

मातङ्गौ मन्त्रपूतेन प्रोक्षयेत् सलिलेन तु ।
मन्त्रेश नाथ भूतेश विघ्ननाथ गणाधिप ॥ ६४

गजानां सत्वसन्देहे कुरु सत्वविनिर्णयम् ।
सुप्रशस्तदिने तत्र गजौ गैरिकमण्डितौ ॥ ६५

अन्योन्यस्पर्धया युक्तौ पार्श्वेऽपि कृतकम्बलौ ।
वेणुदारुकृतास्फोटैर्दन्तसंवृतिभेदकैः ॥ ६६

कृते करेणुघाते तु वेदनां यो न मन्यते ।
हस्तदन्तकृतास्फालस्सततं हन्तुमिच्छति ॥ ६७

नापसर्पति घातेषु प्रतिघातं करोति च ।
घण्टागर्जितनादे तु प्रतिपूरितदिङ्मुखे ।
विवर्तते न दुःखेन स भवेत् सत्ववान् गजः ॥ ६८

॥ इति गजसत्वपरीक्षा सम्पूर्णा ॥

## ॥ अथ नानासत्वयुक्तगजलक्षणम् ॥

सुमनास्सुप्रभश्चण्डस्तेजस्वी दृढविक्रमः ।
कुतूहली प्रतापी च क्रीडते हर्षणश्च यः ॥ ६९

कृतज्ञश्च भवेन्नागः **सात्विको** गजसत्तमः ।
दुर्मना दुर्गतिर्नागः सततं (राजसो) धेनुकामनाः ॥ ७०

आशावान् दुर्बलः क्रूरो विस्मार्युत्तानवेदिता ।
कृच्छ्रेण किञ्चिज्जानीते नर्म चास्य प्रणश्यति ॥ ७१

निद्रालुर्मूढसंज्ञश्च **तामसो** गज उच्यते ।
देवाङ्गना दर्शनीयास्तथा राक्षसकन्यकाः ॥ ७२

पिशाचानां च याः कन्या नागकन्यास्तथैव च ।
गन्धर्वयक्षकन्याश्च कामयाना गजोत्तमान् ॥ ७३

वशारूपाण्युपस्थाय सङ्गता दिग्गजैः पुरा ।
सर्वतः पतितं शुक्रं गर्भं गृह्णन्ति ताः क्वचित् ॥ ७४

प्रसूतिस्तत्क्षणादेव दिग्गजानां महीपते ।
तासां ये गर्भसम्भूता नागा दिव्याङ्गनोद्भवाः ।
देवमानुषगन्धर्वपिशाचोरगराक्षसाः ॥ ७५

यः कान्तिमान् कुमुद - चन्दन - सप्तपर्ण -
सारङ्ग - पद्म - चतुरङ्गुल - तुल्यगन्धः ।
फुल्लाननः कलभकौतुकवानजस्रं
मानोन्नतः प्रियकरः स तु **देवसत्वः** ॥ ७६

गन्धर्वमाहुरतिमुक्तक - यूथिकाऽब्ज
पुन्नाग - नागदळ - चन्दन - तुल्यगन्धिः ।
नादप्रियः शुभगतिः शुभदन्तनेत्रः
कुम्भोत्तमाङ्गकरपुष्करबाहुगन्धिः ॥ ७७

विप्रः शुचिर्मधुपयः परमान्नसर्पि-
श्चूतप्रसूनसमगन्धिसुगन्धिनाङ्गः ।
सामप्रियः सकलनागहितः सुशान्तः
स्नानप्रियः शुभगतिर्गदितो मुनीन्द्रैः ॥ ७८

यश्चन्दनाब्ज - हरिताळ - मनःशिलानां
गन्धैः समो विमलगुग्गुलुकस्य चापि ।
सन्नाहकर्मकुशलो युधि निर्भयश्च
स क्षत्रियो विविधशस्त्रनिपातधीरः ॥ ७९

बन्धूक - शालि - तिल - केतक - मालतीनां
गन्धेन यस्तु समलङ्कृततालुजिह्वः ।
क्लेशक्षमः पिशितभुक् प्रियसान्त्वनश्च
क्रुद्धोऽपि तूर्णमुपशाम्यति वैश्यसत्वः ॥ ८०

उच्छिष्टहृष्टस्सहसैव भीरुः
    शुष्कान्नभोजी स कुळीरगन्धः ।
क्रुद्धो भवेद्यः कृपणः कृतघ्नः
    **सत्वेन शूद्रस्स** गजाधमश्च ॥   ८१

शून्यप्रियः कुणप - लोह - समानगन्धिः
    श्रान्तो निशासु विचरन् घननिस्वनश्च ।
यस्सर्वदैव परिकुप्यति यश्च मूढः
    तं सूरयो गजमुशन्ति **पिशाचसत्वम्** ॥   ८२

यो भूमि - शैवल - फणिज्झक - कर्दमानां
    गन्धैस्सुर - पिशितयोरपि तुल्यगन्धिः ।
त्रस्तो भवेज्जलदशब्दमपि श्रुवाणः
    क्रुद्धोऽनिशं सजलपांसुरतो **भुजङ्गः** ॥   ८३

यः काक - वानर - खर - उष्ट्र - बिडाल - मूत्र -
    विट् - पूतिगन्धिरनिशं भृशदारुणश्च ।
इष्टान्नमांसरुधिरो विनयी कृतघ्नः
    सत्वेन **राक्षस** इति प्रतिकूलकारी ॥   ८४

व्यासप्रोक्ते ग्रन्थे —

अभिषेकोचितः पूज्यः सर्वकार्यार्थसाधकः ।
अव्याहाररतो नित्यं वली रेखाविवर्जितः ॥ ८५

अनामयः स्थिरः शूरो **देवसत्वो** भवेद्गजः ।
मेधावी च क्रियादक्षः कामुकश्चपलः पटुः ॥ ८६

स्तम्भप्रेक्षणकश्शान्तो गजो **गन्धर्वसत्वजः** ।
जलावगाहनासक्तः कोपनः कातरो भृशम् ॥ ८७

भोजने लम्पटो नित्यं कुञ्जरो **विप्रसत्वजः** ।
शान्तश्शूरस्सदोत्साही बली युद्धविशारदः ॥ ८८

अभीरुराहवे धीरः कुञ्जरः **क्षत्रसत्वजः** ।
कपटो दुष्टचेष्टश्च कुशलो विकलस्वरः ॥ ८९

भीरुराहवकाले च कुञ्जरो **वैश्यसत्वजः** ।
दण्डसाध्यस्तथा नीचो मूर्खश्च मलिनाशयः ॥ ९०

आहवानिरतश्शूरः **शूद्रसत्वो** भवेद्गजः ।
राजसः पित्तभूयिष्ठः पित्तलस्स्तब्धविग्रहः ॥ ९१

उन्मार्गेण सदा याति विवेकरहितो भृशम् ।
उन्मत्त इव चेष्टायां द्विपः **पैशाचसत्वजः** ॥ ९२

विश्वासघातकः क्रूरः गमने कुटिलक्रमः ।
न भुङ्क्ते च मदेऽत्यर्थं **सर्पसत्वः** करी मतः ॥ ९३

निशायां चरति स्वैरं मनुष्याणां वधे रतः ।
वेगवान् बलवान् हस्ती **रक्षस्सत्वसमुद्भवः** ॥ ९४

एते हि तामसे सत्वे तामसो वातुलो भृशम ।
सवातो दृश्यते रूक्षो निद्रालुश्चपलो गजः ॥ ९५

॥ इति नानासत्वयुक्तगजलक्षणं समाप्तम् ॥

## ॥ अथ देवादिसत्वयुक्तगजफलम् ॥

देवगन्धर्वसत्वस्याच्छुभो **राजाधिरोहणे** ।
गन्धर्वसत्वस्यात्तद्वच्छुभो **राजाधिरोहणे** ॥ ९६

**सान्नाह्यः** क्षत्रियो नागो **वैश्यस्त्वारोग्यकर्मसु** ।
परिक्लेशसहः प्रोक्तः शूद्रो **भाण्डादिवाहने** ।
पिशाचराक्षसा**स्स्कन्धघातार्थं** सन्धिकर्मसु ॥ ९७

॥ इति देवादिसत्वयुक्तगजफलं सम्पूर्णम् ॥

## ॥ अथ गजस्वरलक्षणम् ॥

शङ्ख - मेघ - कलहंस - दुन्दुभि-
व्याघ्र - सिंह - वृष - सन्निभस्वराः ।
पूजिताः, शुनक - काक - जम्बुक -
क्रोड - वानर - रवा न शोभनाः ॥ ९८

ताल्वोष्ठशिरसः कण्ठजिह्वाहस्तोरसः श्रुतेः ।
जनितो **बृंहिताख्यः** स्यात्तालुजश्च विशेषतः ॥ ९९

**गर्जितं** गळजं विद्याच्छङ्खस्वनसमन्वितम् ।
मेघनादसमं प्राहु **रवश्च** हृदि संस्थितम् ॥ १००

हंसदुन्दुभितुल्यः स्याज्जिह्वाकर्णसमुत्थितः ।
**उत्क्रोशं** गण्डजं विद्याद्व्याघ्रस्वरसमं बुध ।
**निनदं** हस्तशिरसोर्मृगेन्द्रवृषसंमितम् ॥ १०१

एतत्स्थानसमुत्थाः
शब्दा ये चात्र वारणेन्द्राणाम् ।
सर्वे **बृंहितसंज्ञाः**
शुभावहा मानवेन्द्राणाम् ॥ १०२

**बृंहितगर्जितफेना-**
**यित**मिति शब्दस्त्रिधैव नागानाम् ।
**बृंहित**मिह तालुस्थं
कण्ठप्रभवं तु **गर्जितं** विद्यात् ॥ १०३

जिह्वामूलसमुत्थ
**फेनायित**मित्यभिख्यातम् ।
हस्तेन मृदङ्गस्वं
कर्णाभ्यां दुन्दुभिस्वरं चैव ॥ १०४

दर्दुरनिनदं मुखतः
करोति यः पूजितस्स गजः

इति गजशास्त्रे ब्रह्मांश - वर्ण - छाया - गन्ध - सत्व - स्वर - लक्षणं नाम
॥ अष्टमं प्रकरणं समाप्तम् ॥

## ॥ अथ गजगतिलक्षणम् ॥

— o —

मल्ल - सिंह - शुक - व्याघ्र - शार्दूल - वृषसन्निभा ।
समासना समपदा समदेहा **गतिः शुभा** ॥ १

समा च लघुपादा च वेगेऽप्यम्लानकारिणी ।
शुभलक्षणयुक्तस्य हयस्य करिणोऽपि वा ॥ २

मत्तस्य मुदितस्यापि गतिस्तुल्या **शुभा** मता ।
वृकस्य कृकलासस्य खरस्य नकुलस्य च ॥ ३

समा गतिर्दन्तिनो या सा **दुष्टेति** मता बुधैः ।
पृष्ठवालादिगात्रेषु विषमा विकटासना ॥ ४

वेगेऽपि मन्दगश्चाग विशेषान्दोलितासना ।
गति**र्विगर्हिता** प्रोक्ता करिणां शास्त्रचिन्तकैः ॥ ५

ग्रन्थान्तरे —

सारङ्ग - सिंह - शुक - वानर - मल्ल - हंस -
शार्दूलकस्य सदृशी **शुभदा गतिः** स्यात् ।
[**दुष्टा गतिस्तु** सदृशी कृकलासकस्य
या वै खरस्य नकुलस्य वृकस्य चापि ॥] ६

वल्मीक - स्थाणु - गुल्म - क्षुप - तरु - मथनस्येच्छया हृष्टदृष्टिः
यायाद्गात्रानुलोमत्वरितगतिपरो वक्त्रमुन्नम्य चोच्चैः
कक्ष्या सन्नाहकाले जनयति च मुहुः कम्पनं बृंहितं वा
तत्कालं वामदन्तं जयकृदथ रदं वेष्टयन् दक्षिणं वा ॥ ७

॥ इति गजगतिलक्षणं सम्पूर्णम् ॥

## ॥ अथ आवर्तलक्षणम् ॥

—o—

अथावर्तान् प्रवक्ष्यामि यथावदनुपूर्वशः ।
सर्वकालफलास्सर्वे प्रशस्तांश्च निबोध मे ॥ ८

## ॥ अथ शुभावर्तस्थान - रूप - फलम् ॥

—o—

पिञ्छूषे पुष्करे चैव वक्षस्युभयपक्षयोः ।
तथांसककले चैव तथा रन्ध्रोपरन्ध्रयोः ॥ ९

भुजयोः कक्षयोश्चापि वालवृन्ते तथैव च ।
भाले लाङ्गूलवंशे च मण्डूक्ये वक्रसंस्थिनि ॥ १०

आवर्ताः सुप्रशस्ता वै क्षेमारोग्यजयावहाः ।
सर्वकालफला ह्येते तेषामाकृतयस्त्विमाः ॥ ११

शङ्खा - ब्ज - कुम्भ - मत्स्याभैर्वर्धमान - निभैस्तथा ।
प्राकाराऽऽदर्श - वृषभ - दीप - प्रासाद - तोरणैः ॥ १२

वेदी - यूपनिभैश्चैव शक्ति - पट्टिशसन्निभैः ।
शरास - चामराकारै - रङ्कुश - छत्रसन्निभैः ॥ १३

तनुभिः बिन्दुभिर्भव्यवलिभिस्सद्विवर्तनैः ।
वलीनां सङ्गमाद्वापि लक्षयेदाकृतीर्बुधः ॥ १४

दक्षिणे दक्षिणावर्तो हस्तिनो यस्य दृश्यते ।
विशेषाच्छुभदः प्रोक्तः इतरोऽशुभदायकः ॥ १५

हस्तिनो यस्य दृश्येत वामावर्तस्तु वामके ।
विशेषाच्छुभदः प्रोक्तः इतरोऽशुभदायकः ॥ १६

## ॥ अथ अशुभावर्तस्थान - रूप - फलम् ॥

—— o ——

गात्रापरे कटे गण्डे गळे हृदि हनौ तथा ।
तथा मेढ्रे तथा कुक्षौ प्रोहभागे नखेषु च ॥ १७

अण्डपाते च वृषणे जङ्घातत्परपेचके ।
अष्ठीवतोश्च विज्ञेयो ह्यङ्गुलौ मस्तके तथा ॥ १८

वाहित्थे प्रतिमाने च कृष्णान्ते च निगाळके ।
मर्मसन्धिविशेषेषु जठरे च महीपते ॥ १९

आवर्तास्त्वप्रशस्ताः स्युः कुलकोशक्षयावहाः ।

## ॥ अथ अङ्गदोषाऽशुभावर्तापवादः ॥

—o-

यस्याङ्गुलिः प्रशस्ताऽसौ हस्तदोषनिवारणे ॥ २०

दन्तस्थान् हस्तिनो हस्तो दन्तौ च मुखजान् पुनः ।
मुखं तु नेत्रयोर्दोषान्नेत्रं तु नखजांस्तथा ॥ २१

नखाः स्फिग्गतदोषांस्तु स्फिजावूर्वोरपि स्थितान् ।
ऊरू कायगतान् दोषान् कायो बन्धोपरि स्थितान् ॥ २२

अपरो वालजांश्चैव वालधिः कोशसंस्थितान् ।
कोशो निहन्ति निर्दोषः सर्वाङ्गोपाङ्गसंस्थितान् ॥ २३

यस्याङ्गुलिः प्रशस्ता वै हस्त्यलक्षणवानपि ।
स बाह्यस्थैस्तथान्तस्थैर्दोषैर्न प्रतिहन्यते ।
दन्तदोषस्तु यस्यैष मुखजं हन्ति लक्षणम् ॥ २४

॥ इत्यावर्तलक्षणं समाप्तम् ॥

## ॥ अथ गजमहादोषाः ॥

त्रिदन्ता अधिकाङ्गाश्च समुष्का ये च निस्पृहाः ।
अतिपादाश्च ये नागा गर्भिणीव सदोदकाः ॥ २५

पूतनामातृकश्चैव मायिको मत्कुणस्तथा ।
गात्राभ्यामपराभ्यां च कटाभ्यामपि वारणः ॥ २६

ताभ्यामेकेन वा हीनो व्यालहस्ती तथैव च ।
वालदण्डेन कोशेन हस्तेनाङ्गुलिना तथा ॥ २७

श्रोत्रान्तरेण नाभ्या च नासया च मतङ्गजः ।
अधिकोऽप्यथवा हीनो मूकश्च बधिरस्तथा ॥ २८

छायाहीनश्च कुब्जश्च पैशाचश्च मतङ्गजः ।
प्रवेष्टयोरप्रविष्टरोमकूपोपलक्षितः ॥ २९

कच्चव्यासशरीरश्च विषमैर्लोमभिर्युतः ।
एतल्लक्षणसंयुक्तो गजानं हन्ति वारणः ॥ ३०

यस्य पादौ महापार्ष्णी कृष्णा नयनयोश्च यः ।
यस्यास्ति योनिर्विकृता कोशश्च स न शोभनः ॥ ३१

अन्ये च दारुणफलाः सर्वेश्चाशुभलक्षणैः ।
युक्ताश्च दृष्टरूपा महादोषाः प्रकीर्तिताः ॥ ३२

॥ इति वैशम्पायने गजमहादोषाः समाप्ताः ॥



## ॥ अथ गजपरिमाणम् ॥

नवाष्टौ सप्त चायामाः सप्त षट् पञ्च चोच्छ्रयाः ।
नाहे दश नवाष्टौ च भद्रमन्दमृगाः क्रमात् ॥ ३३

अष्टारत्निर्दशायामे चैकादश च नाहतः ।
**अराळः** स तु विज्ञेयः सर्वकर्मसु गर्हितः ॥ ३४

ग्रन्थान्तरे —

अष्टहस्तोच्छ्रितो नागो दशहस्तायतस्तथा ।
एकादशपरीणाहो ह्यराळमिति तं विदुः ॥ ३५

नाहतो द्वादशारत्निरत्यराळ इति स्मृतः ।
अत्यराळमराळं च न गृह्णीयात्कदाचन ॥ ३६

## ॥ अथ उत्तममध्यमाधमगजप्रमाणम् ॥

—o—

सप्तहस्तोच्छ्रितो नागो नवारत्न्यायतस्तथा ।
दशारत्निपरीणाहः स भवेदुत्तमो गजः ॥ ३७

षडरत्न्युच्छ्रितश्चैवमष्टारत्न्यायतस्तथा ।
अष्टा(नवा)रत्निपरीणाहः स भवेन्मध्यमो गजः ॥ ३८

पञ्चारत्न्युच्छ्रितश्चैव सप्तारत्न्यायतस्तथा ।
अष्टारत्निपरीणाहः स भवेदधमो गजः ॥ ३९

ग्रन्थान्तरे

पञ्चोन्नतः सप्तकरं च दीर्घा
ह्यष्टौ च हस्ताः परिणाहयुक्ताः ।

एकद्वित्रिवृद्ध्या मृगमन्दभद्राः
सङ्कीर्णनागोऽनियतप्रमाणः ॥ ४०

अरत्निमात्रेणाधिक्यात् **दराळ**स्तु निगद्यते ।
**अत्यराळो** द्व्याधिक्यान्निन्द्यौ मानाधिकाविमौ ॥ ४१

वैय्यासिक्य —

सप्तारत्निसमुत्सेधो नवारत्न्यायतस्तथा ।
दशारत्निपरीणाहः स गजो मानतः **शुभः** ॥ ४२

अरत्निमात्रहीनो यः स **मध्यो** मानतो गजः ।
अरत्निद्वयहीनश्च **कनिष्ठः** परिकीर्तितः ॥ ४३

कनिष्ठादपि यो हीनो **वामनः** स निगद्यते ।
वामनादपि यो हीनः **कुब्जो** निन्द्यौ गजाविमौ ॥ ४४

॥ इति गजपरिमाणं समाप्तम् ॥



## ॥ अथ दिग्गजपरिमाणम् ॥

उच्छ्रिता योजनैस्सप्तशतैर्नवशतैरपि ।
आयतास्ते दशशताऽऽनाहा ऐरावणादयः ॥ ४५

मुखादापेचकं दैर्घ्यं पृष्ठपार्श्वोदरान्तरा ।
आनाह उच्छ्रयः पादाद्विज्ञेयो यावदासनम् ॥ ४६

परिणाहः प्रमातव्यः कक्षापृष्ठोदराश्रितः ।
रज्वा तन्त्र्यादिना वापि प्रमाणं तु प्रचक्षते ॥ ४७

॥ इति दिग्गजपरिमाणं सम्पूर्णम् ॥

## ॥ अथ प्रमाणप्रकरणतः योजनप्रमाणं कथ्यते ॥

परमाणुस्सुसूक्ष्मत्वाद्भूमौ ग्राह्यो न चक्षुषा ।
ते चाष्टौ त्रसरेणुस्स्यात्त्रसरेणोस्तथाष्टकम् ॥ ४८

रथरेणुस्तदष्टाभिर्वालाग्रं समुदाहृतम् ।
वालाग्राणि तथा चाष्टौ लीक्षेति समुदाहृता ॥ ४९

अष्टौ लीक्षा भवेद्यूका ताश्चाष्टौ यव उच्यते ।
अङ्गुलं स्याद्यवाश्चाष्टौ पादोऽस्त्वेष्षडङ्गुलः ॥ ५०

द्विवितस्तिररत्निस्स्याद्वितस्तिर्द्वादशाङ्गुलः ।
चतुर्वितस्तिः किष्कुस्स्यात् द्वौ किष्कू धनुरुच्यते ॥ ५१

धनुस्सहस्रं गोळस्स्यात्क्रोशस्स्याद्गोळयुग्मतः ।
क्रोशद्वयं तु गव्यूतिस्तद्द्वयं योजनं स्मृतम् ।
अष्टौ धनुस्सहस्राणि योजनं परिकीर्तितम ॥ ५२

॥ इति परमाण्वादि योजनान्तप्रमाणं सम्पूर्णम् ॥

॥ इति गजशास्त्रे गजगतिलक्षणादि कथनं नाम नवमं प्रकरणं सम्पूर्णम्

## ॥ अथ आसनलक्षणम्

उत्कृष्टं मध्यमञ्चैव ह्यवकृष्टमिति त्रिधा ।
गजानामासनं प्रोक्तं गजशास्त्रविशारदैः ॥ १

मन्दादिजातौ युद्धे च प्रोक्त**मुत्कृष्टमासनम्** ।
समं दृढं च संलग्नं जानुसन्धिसमाहितम् ॥ २

आसनत्रितयेऽप्येवं सौष्ठवं परिकल्पयेत् ।
गजस्य प्रेरणार्थाय पुरस्तादासनं जगुः ॥ ३

मन्दादिजातौ युद्धे च प्रोक्तमुत्कृष्टमासनम् ।
प्रोद्धतं ह्यधुतेरशस्तमुभयानतजानुकम् ॥ ४

भद्रादिजातौ भावे च मध्यमासनमुच्यते ।
समानप्रेरणायां तु मध्यमासनमीरितम् ॥ ५

मृगादिजातौ व्यग्रे तु शिरोविधुतितत्परे ।
अवकृष्टासनं शस्तं मातङ्गानां यथाक्रमम् ॥ ६

निवर्तने तु करिणोऽवकृष्टासनमुच्यते ।

(तत्र गजसामान्यस्य युद्धे प्रसक्ते उत्कृष्टमेवासनं विधेयम् । गजसामान्यस्य स्वाभाविकगमने मध्यमासनं विधेयम् । गजसामान्यस्य व्यग्रतादशायां शिरोविधूननकाले अवकृष्टमासनं विधेयमिति भावः ॥)

एकः प्रसारितः पादः तदन्यो नतजानुकः ॥ ७

पाश्चात्यपदसंज्ञं तु एकजान्वानतं बुधैः ।
एकजानुगतश्चैतदासनं भावकर्मणि ॥ ८

प्रसारिताभ्यां पादाभ्यामासनं यच्च(नत)जानुकम् ।
उत्कटेरुत्कटं ज्ञेयं पाश्चिमं कुञ्जरासनम् ॥ ९

कूर्ममुत्कटकञ्चैव लीलायाते प्रशस्यते ।
वंशतो(स्यो)भयपार्श्वीय(र्श्वे तु) संहते ननु(यदि)जानुनी ॥

**मण्डूकासन**मेतत्स्यादूर्ध्वं सङ्ग्रामकर्मणि ।
आसनञ्चोर्ध्वकं ज्ञेयं संग्रामे तत्प्रशस्यते ॥ ११

एकमुत्कण्ठगं पादमन्यच्च नतजानुकम् ।
यत् करोति नरः पृष्ठे तत् **कूर्मासन**मुच्यते ॥
कूर्ममुत्कटकञ्चैव लीलायाते प्रशस्यते ॥ १२

॥ इति आसनलक्षणं समाप्तम् ॥



## ॥ अथ सृणिप्रणिधयः ॥

---

सृणिप्रणिधयश्चापि चत्वारः परिकीर्तिताः ।
ईषत्संस्पर्शनेनाद्यः प्रणिधानेन चापरः ॥ १३

पीडनेन तृतीयस्स्याच्चतुर्थो दृढघातनात् ।
शिरस्स्पर्शनमात्रं तु ह्यङ्कुशस्य विधीयते ॥ १४

**ईषत्स्पृष्टः** स विज्ञेयो घातः प्रणिधिकोविदैः ।
अर्धाङ्गुलिनिमग्नश्चेदङ्कुशः करिमस्तके ॥ १५

**प्रणिधानाभिधो** घातो विधेयानां विधीयते ।
द्वित्र्यङ्गुलप्रमाणस्तु घातः **पीडितकः** स्मृतः ॥ १६

द्वाभ्यां कराभ्यां रोषेण घातस्स्यात् **दृढघातकः** ।
सृणिः प्रसार्यतेऽग्रे यत्त**त्क्षिप्त**मिति कथ्यते ॥ १७

पश्चादाकृष्यते यत्तु **द्य(प्र)तिक्षिप्तं** निगद्यते ।
अङ्कुशं वर्तयेत्तिर्यक् पार्श्वयोरुभयोरपि ॥ १८

**प्रतोदनामा** स ज्ञेयो ह्यारोहणविशारदैः ।
उत्क्षिप्य भ्रामणं यत्तु **सृणिसूक्ष्म**स्स कथ्यते ।
सृणितो मुखतश्शिक्षा **ह्यादिष्टप्रणिधि**र्भवेत् ॥ १९

॥ इति सृणिप्रणिधयः ॥

## ॥ अथ पादप्रणिधयः ॥

पादप्रणिधयो राजन् चत्वारः परिकीर्तिताः ।
अङ्गुष्ठस्तस्य चोत्सङ्गस्तस्याधः पार्ष्णिरेव च ॥ २०

पादयोः प्रणिधी राजन् कलायाश्च निपीडनम् ।
बहिर्मुखे च कर्तव्ये यन्ता पादतले दृढम् ॥ २१

पुरः प्रेरयितुं गाढमङ्गुष्ठाभ्यां प्रपीडयेत ।
आकर्षणाय पार्ष्णिभ्यां स्थिराय चैव पीडनम ॥ २२

वारणे चरणाघातो दक्षिणेन पुनर्भवेत् ।
वामेनाङ्गुष्ठयोगेन दक्षिणेन निवर्तयेत ॥ २३

अधोमुखं विधातुं वै कुञ्जरं यदि वाञ्छति ।
निम्नाङ्गष्ठौ विधातव्यौ ताभ्यामेव प्रपीडनम ॥ २४

ऊर्ध्वं मतङ्गजं कर्तुं यन्ता प्रेप्सुर्भवेद्यदि ।
उन्नताङ्गष्ठयोगेन कारयेदूर्ध्वमाननम ॥ २५

॥ इति पादप्रणिधयः समाप्ताः ॥



## ॥ अथ वाक्प्रणिधयः ॥



वक्ष्यामि वाचां प्रणिधीन् सम्प्रोक्तांस्तान्मनीषिभिः ।
तत्रोपलालनं पूर्वं ततस्संज्ञापना परा ॥ २६

सन्तर्जना तृतीया वै प्रभेदस्तत्र कथ्यते ।
गजस्य भयनाशार्थं कोपोपशमनाय च ॥ २७

सान्त्वनं क्रियते वाचा तद्भवेदुपलालनम् ।
गजस्तु शिक्षितं भावं क्रियया नोपपद्यते ॥ २८

संज्ञापनार्थं प्रणिधिः सोक्ता **संज्ञापना** बुधैः ।
विपरीतप्रवृत्तौ तु वाचा निर्भर्त्सयेद्गजम् ।
तद्धि **भर्त्सना** प्रोक्ता गजशास्त्रविशारदैः ॥ २९

॥ इति वाक्प्रणिधयः समाप्ताः ॥

## ॥ अथ दन्तच्छेदकालादिकथनम् ॥

--o-

तिष्या - श्वि - भोगि - कर - सौम्य - मघा - नुराधा -
पौष्णो - त्तरा - ऽदिति - मरु - द्वसु - वैष्णवेषु ।
वागीश - शुक्र - शशि - सौम्यदिने सुलग्ने
रिक्तां विहाय विधिवद्गजदन्तकर्म ॥ ३०

वसन्ते रविवारे वा गुरोर्वारे शुभे दिने ।
देवता ब्राह्मणान् नत्वा दन्तकर्म विधीयते ॥ ३१

## ॥ अथ दन्तच्छेदे अङ्गुलवर्षभेदः ॥

——o——

षडङ्गुलं तु नादेये त्र्यङ्गुलं गिरिचारिषु ।
चतुरङ्गुलं तु मिश्रेषु वर्षके दन्तवर्धनम् ॥ ३२

त्रिभिर्वर्षैस्तु कर्तव्या नादेये दन्तकल्पना ।
पञ्चाब्दे पार्वतीयस्य तस्मिश्चोभयचारिणः ॥ ३३



## ॥ अथ दन्तच्छेदनसाधनम् ॥

——o——

सूत्राणि करपत्रञ्च लोहशङ्कुस्तथैव च ।



## ॥ अथ दन्तच्छेदनप्रमाणम् ॥

——o——

अक्षिकूटात्तु विद्धाग्रं दत्वा सूत्रं तु दन्तिनाम् ॥ ३४

प्रसार्य दन्ते तत्सूत्रं कल्पयेद्गिरिचारिणाम् ।
नेत्रादिविदुसूत्रान्तं मानमुक्तं नदीचरे ॥ ३५

## ॥ अथ दन्तच्छेदननियमः ॥

—o—

यथोक्ततिथिनक्षत्रे मुहूर्ते चातिपूजिते ।
धूपयित्वा गजं सम्यग्गन्धमाल्यैः प्रपूज्य च ॥ ३६

प्रयतश्शिक्षितो वैद्यश्शुक्लवस्त्रधरश्शुचिः ।
रात्रावुपोष्य विधिवद्गजदन्तचिकित्सकः ॥ ३७

हुत्वा तेन बलिं कृत्वा सन्तर्प्य विधिवद्द्विजान् ।
उदङ्मुखं प्राङ्मुखं वा समासीनं मतङ्गजम् ॥ ३८

अम्बुना शुचिना पूर्वं शिरोऽधः परिषेचयेत् ।
सरत्नबीजनिचयं विषाणं चापि दक्षिणम् ॥ ३९

विधाय कल्पमानञ्च सिञ्चेच्छीतेन वारिणा ।

—o—

## ॥ अथ दन्तकल्पनायां शुभतिथयः ॥

—o—

द्वितीयां तिथिमारभ्य यावत्प्राप्ताऽष्टमीतिथिः ॥ ४०

तावत्तिथिषु कर्तव्या गजानां दन्तकल्पना ।
सप्तम्यां च नवम्यादौ न कुर्याद्दन्तकल्पनम् ॥ ४१

दक्षिणं कल्पयेत्पूर्वं वामं तु तदनन्तरम् ।
विजयस्तु भवेदन्ते दक्षिणे ह्यादिकृन्तने ॥ ४२

कल्प्यमानं विषाणं तु मूसो तु निपतेद्यदि ।
अचिरेणैव कालेन राज्ञो राष्ट्रं विनश्यति ॥ ४३

तस्माद्विषाणमध्ये तु करभ्यां ग्राहयेद्दृढम् ।

## ॥ अथ दन्तच्छेदवर्णफलम् ॥

छेदं तु कनकप्रख्यं पुण्डरीकनिभं तथा ॥ ४४

मधुवर्णं भवेद्वापि मृद्वीका सन्निभा तथा ।
तेन राजा जयेत्पृथ्वीं चतुस्सागरमेखलाम् ॥ ४५

धूमवर्णेषु पुष्पेषु दृश्यमानेषु दन्तयोः ।
सम्यक् समादिशेद्राज्ये नृपतेर्बलनक्षयम् ॥ ४६

## ॥ अथ दन्तच्छेदगन्धफलम् ॥

चन्दनागरुसिक्तोर्वी तुल्यगन्धा भवेद्यदि ।
जयं राष्ट्रस्य वृद्धिं च भूमिलाभं च निर्दिशेत् ॥ ४७

पाटलोत्पलपद्मानां तुल्यगन्धश्शुभो भवेत् ।
माल्यगन्धिषु जानीयादर्थसिद्धिं पुरस्थिताम् ॥ ४८

करीषसदृशो गन्धो गवां वृद्धिं समादिशेत् ।
भयं वै पूयगन्धे तु तथा शोणितगन्धिनि ॥ ४९

महाभयं विजानीयात्तथा कुणपगन्धिनि ।
दुर्भिक्षं निर्दिशेत्तत्र राष्ट्रे व्याधिभयं भवेत् ॥ ५०

## ॥ अथ दन्तच्छेददृश्यमानाकारफलम् ॥

—— o-

भूषण - स्वस्तिका - दृशो यात्रासिद्धिकरा द्विपः ।
प्रासाद - शक्ति - श्रीवृक्ष - वर्धमानस्य दर्शने ॥ ५१

सङ्ग्रामविजयं चैव राष्ट्रवृद्धिं तथाऽऽदिशेत् ।
स्त्रीलाभं शयने विन्द्यात्सततं मनसः सुखम् ॥ ५२

नक्र - शम्बूक - शङ्खानां नळिनोत्पलयोरपि ।
प्रतिरूपाणि दृश्यन्ते तत्र वृद्धिं समादिशेत् ॥ ५३

स्नेहयुक्तं तथा स्विन्नं भूमिनाशं दिशेत् द्वयम् ।
यन्नीलपुष्पसदृशं परुषं च महद्भयम् ॥ ५४

धूमवर्णेषु पुष्पेषु दृश्यमानेषु दन्तयोः ।
सद्यः समादिशेद्राज्ये नृपतेर्वाहनक्षयम् ॥ ५५

कपिवाराहकृष्णाहिनिभं राज्यच्युतिं दिशेत् ।
प्रवाळमणिमुक्तादिवज्रवैडूर्यचिलिताः ।
दन्तकोशा भवेयुर्वै पूजार्हेषु च दन्तिषु ॥ ५६

श्रीवृक्ष - वर्धमान -
छत्र - ध्वज - चामरानुरूपेषु ।
छेदे दृष्टेष्वारोग्य -
जयधनवृद्धिसौख्यानि ॥ ५७

प्रहरणसदृशेषु जयो
नन्द्यावर्तेषु नष्टदेशाप्तिः ।

॥ इति गजदन्तच्छेदकाल - नियम - वर्ण -
गन्धा - कारफलकथनं सम्पूर्णम् ॥

## ॥ अथ दन्ताघातलक्षणम् ॥

चतुर्दशरदाघातैर्युद्धकर्मविशारदः
युद्धवेदीं प्रविष्टो न हन्यते प्रतिकुञ्जरैः ॥ ५८

सङ्घातश्च तथोल्लेखः परिलेखस्तथैव च ।
कर्तरी तलघातश्च पार्श्वघातस्तथैव च ॥ ५९

आराघातः - सूचिघातः - तोटकः - सन्धिकस्तथा ।
कशाघातस्ततो ज्ञेयो वृक्षाघातस्तथैव च ॥ ६०

निर्घातो मिश्रितश्चैव दृश्यन्ते किल दन्तिषु ।
इत्थं चतुर्दशाघाता प्रोक्ता वै मुनिपुङ्गवैः ॥ ६१

अन्योन्यमुखसंश्लेषः सङ्घात इति कथ्यते ।
प्रोथाक्षेपस्तु दन्ताभ्यामुल्लेखः प्रोच्यते बुधैः ॥ ६२

तिर्यगुन्नतघातोऽयं परिलेखः स उच्यते ।
उभयोः पार्श्वयोश्चैव दन्ताघातस्तु कर्तरी ॥ ६३

दन्तवेष्टनलेखानस्तलाघातस्स उच्यते ।
पार्श्वाघातस्स विज्ञेयो यश्च तिर्यक् प्रयुज्यते ॥ ६४

आराघातस्तु दन्ताभ्यां संमुखाभ्यां सलेखकः ।
करमध्यप्रदेशे तु सूचीघातः स उच्यते ॥ ६५

शिरस्तिर्यक्समाकृष्य दन्तेनैकेन हन्ति यत् ।
तोटकाघात इत्येष कथितो घातकोविदैः ॥ ६६



गजयुद्ध 'आगाघात' ।
Elephant fight — 2nd mode.



गजयुद्धे 'संघात:' ।
Elephant fight — 3rd mode.



सन्नाह्य सकवच गज ।

An Armoured Elephant.



गजयुद्धे 'परिलेखः' ।

Elephant fight — 1st mode

लीलावेदीं समारुह्य गात्राभ्यामतिकोपनः ।
हन्ति यत् सिह्मवन्नागं स घातः **सन्धिको** मतः ॥ ६७

वदनं तिर्यगुन्नम्य प्रहरेद्यः प्रतिद्विपम ।
**कशाघातः** स विज्ञेयो घातसङ्ख्यानुकोविदैः ॥ ६८

प्रतिमाने प्रतीमानं रदनं रदनान्तरे ।
विधाय ताडनं यत्तु **वृक्षाघातः** स उच्यते ॥ ६९

उपेत्य गात्रसङ्कोचं पश्चादुत्प्लुत्य चैव यत् ।
हन्ति दन्ती प्रकामं वै स **निर्घातः** प्रकीर्तितः ॥ ७०

एतेषां तु समायोगो यो भवेत् सर्वलक्षणः ।
दन्ताघातस्तु नागानां **मिश्रकः** संविधीयते ॥ ७१

यथा नरसहस्राणि हन्ति हस्ती रणाङ्गणे ।
तथा रथतुरङ्गाणां कुशलो (हन्ति हस्तिपः) ॥ ७२

॥ इति दन्ताघातलक्षणं सम्पूर्णम् ॥

## ॥ अथ मदशोभालक्षणम् ॥

—o—

करिणां मदकाले तु सप्त शोभा भवन्ति हि ।
वक्ष्यामि लक्षणं तासां क्रमशो नामतस्तथा ॥ ७३

करं कर्णौ च पुच्छं च मुखं चालयति द्विपः ।
सृक्किणी तालु जिह्वा च स्तनयुग्मं विलोचने ॥ ७४

ईषद्व्यक्तिः समायाति प्रत्यहं वर्धते क्रमात् ।
सुच्छाया रक्तवृत्ता च **सञ्जातरुधिरा** मता ॥ ७५

प्रतिमाने च कण्ठे च मणिबन्धे च वक्षसि ।
कक्षयोर्मांसवृद्धिश्च **प्रतिच्छिन्ने**ति सा मता ॥ ७६

सर्वसन्धिषु गात्रेषु वदने पक्षयोर्द्वयोः ।
पीनता वलिनाशश्च यत्रासौ **पक्षलेपिनी** ॥ ७७

कक्षयोः कण्ठदेशे च दन्तस्योभयपार्श्वयोः ।
उच्छूनता भवेत्तत्र **धातुसाम्यांशका** मता ॥ ७८

वरिष्ठाऽऽदित्रयाच्छोभा चतुर्थी करिणां मता ।
युद्धे ध्वनिविनोदे च **समकक्षे**ति कथ्यते ॥ ७९

वंशश्च समतां याति त्रिकं पक्षस्तथा गजः ।
निर्ह्रादमदगामी च दीर्घोच्छ्वासस्तथाऽलसः ॥ ८०

पञ्चमी समकक्षेति शोभा **शोभाकरी** स्मृता ।
गात्रे चलन्ति मांसानि षष्ठी सा **चलिता** मता ॥ ८१

निमग्नः पृष्ठवंशश्च कदल्युत्तानपत्रवत् ।
यत्र सा **द्रोणिका** नाम शोभेयं सप्तमी मता ॥ ८२

## ॥ अथ मदावस्थालक्षणम् ॥

—— o ——

ततः सञ्जातशोभस्य मदावस्थास्तु दन्तिनः ।
भवन्ति पञ्चमे वाऽह्नि सप्तमे द्वादशे क्रमात् ॥ ८३

पृष्ठं मेढ्रसमं तु स्यादीषद्रक्ते च लोचने ।
कान्तिमान् करिणीलुब्धो गजांश्च परिजिघ्रति ॥ ८४

गजविद्या पदं धत्ते द्विपेभ्यः परिकुप्यति ।
दर्शनीयो गजाघाती दन्ताभ्यां हन्ति भूरुहान् ॥ ८५

पांसुक्रीडनलोलस्स्यादकाले ध्यानतत्परः ।
**प्रथमां तां मदावस्थां** प्राप्तः स **वित्तिनामकाम्** ॥ ८६

स्वल्पनिद्रो रुपायुक्तो जृम्भते यदि तिष्ठति ।
बहुक्रोधो ह्यसौ सेयं कोपावस्था द्वितीयकी ॥ ८७

कुरुते बृंहितं शश्वदतस्तं परिवर्जयेत् ।
आलानन्नाशु लभते शय्यान्न प्रतिपद्यते ॥ ८८

पृष्ठशाखां समालम्ब्य भ्रमयति कन्धराम् ।
गमने पाटवं धत्ते भविता प्रबलो गजः ॥ ८९

उच्छूनाम्यः कटद्वशो मुखं च परिशोभितम् ।
आकर्षयति मूत्रं च स्रोतसी विवृते तथा ॥ ९०

कटौ चुम्बति हस्तेन तिर्यग्वीक्षणतत्परः ।
उपसर्पति यश्चाशु क्रोधनस्सृक्कलेहनः ॥ ९१

अत्यासन्नमदो दृष्टो वारणस्यात्प्रभेदने ।
दृश्यते तिलकप्रायं दानं यस्य कटद्वये ॥ ९२

प्राग्विभेति यतस्तस्मै कुर्य्यात्तिलकितं हि तत ।
वितस्तिमात्रं वदने दानं गण्डस्थलान्तरे ॥ ९३

पुष्करे सीकरस्रावी निर्भयो द्विकपोलके ।
गच्छन्नक्षन्मदास्रावी दानवान्मदविह्वलः ॥ ९४

दानप्रवाहो मिळितो नेत्रयोर्दूषिता मता ।
मेघवद्गर्जितं यस्य पूर्वलक्षणलक्षितः ॥ ९५

अधोऽनुबन्धिनी नाम तृतीया परिकीर्तिता ।
बहुगन्धमदस्रावी समकक्षां समाश्रितः ॥ ९६

हर्षकोपौ समौ विभ्रद्विनोदायाधने क्षमः ।
सर्वसत्वजिघांसुस्स्यादारूढस्य वशानुगः ॥ ९७

गजवाह्यो गजो यत्र स भवेत गन्धवारिमान् ।
सदा चक्षुषि रक्तान्तो ग्रासहर्षी जिघांसनः ॥ ९८

कर्णयोः स्तनयोरक्ष्णोः कटयोस्तालुपुष्करे ।
रोमहर्षेषु कोशे च स्रवत्यष्टासु सर्वदा ॥ ९९

आरोहस्यावशो यस्यामवस्था क्रोधिनी मता ।
रात्रौ भ्राम्यति संरम्भात्स्तम्भं नाश्रयते रुषा ॥ १००

निद्रां बुभुक्षां नो वेत्ति नेत्रे कर्णेऽप्यतिस्रवेत् ।
अधोमदप्रवाहश्च भवेत्सा चलिता परा ॥ १०१

अतिदानप्रवाहाढ्यो निर्मांसश्चास्थिभूषणः ।
प्रणिधिश्रितयोल्लङ्घी प्रतिबिम्बं हिनस्ति च ॥ १०२

एवं निरङ्कुशो यस्यामवस्था साऽतिवर्तिनी ।
न पश्यति न जानाति न शृणोति न तिष्ठति ॥ १०३

संभिन्नमदमर्यादो यस्यात्प्रत्युग्रगन्धवान् ।
षष्ठ्यां निवर्तयेन्नागं सप्तमीं नैव लङ्घयेत् ।
अन्यथाकुर्यदा देही क्षिप्रमेव हि नश्यति ॥ १०४

॥ इति मदशोभा मदावस्थालक्षणं संपूर्णम् ॥

## ॥ अथ वाद्यालिप्रकरणम् ॥

एवं मदयुतान् नागान् विवादाय प्रकल्पयेत् ।
गजाध्यक्षं समाहूय क्षपणायादिशेन्नृपः ॥ १०५

वीरमुण्डाभिधं वाद्यं मृदङ्गध्वनिहर्षणम् ।
ढक्कया गजघण्टाभिर्वादयेति विनिर्दिशेत् ॥ १०६

रजन्याः प्रथमे यामे वीरमुण्डस्य वादने ।
समन्ताद्गजमावेद्य(ष्ट्य) तिष्ठेयुः परिचारकाः ॥ १०७

सिंहनादांश्च ते कुर्युर्भटानां रोमहर्षणान् ।
तेषां रवान् समाकर्ण्य समाहूय महीपतिः ॥ १०८

पदातिनिवहांश्चैव घनश्वेतदुकूलकम् ।
शृङ्गारार्थं नृपो दद्यात्तेषां तेषां पृथक् पृथक् ॥ १०९

मण्डनार्थं मदेभानां तैलं सिन्दूरमेव च ।
कौसुम्भैर्वीरकैः कार्याः कोपायोद्दीपपिण्डकाः ॥ ११०

निद्रारम्भे च निद्रान्ते निद्रार्थं मददन्तिनः ।
मृणालाशनकं भूरि निद्रार्थं मददन्तिनाम् ॥ १११

उद्दीपनान् ततः पिण्डान् प्रागुपात्तान् पृथक् पृथक् ।
प्रकृत्याद्यनुरोधेन महामात्रैः प्रदापयेत् ॥ ११२

स्थापयेदातपे मन्दान्भद्रान् छायातपे गजान् ।
मृगांश्छायासु बध्नीयान्महामात्रो विचक्षणः ॥ ११३

विवादादिवसे तेषामन्नपानानि चाचरेत् ।
तैलेन जघनं लेप्यं सिन्दूरेण च मस्तकम् ॥ ११४

गजकुम्भस्य मध्ये च कुर्यात्तिलकमुत्तमम् ।
अलङ्कृतांस्तथा नागान्बाह्याल्यभ्याशदेशतः ॥ ११५

आलानेषु च बन्धीयाद्दूरतस्तु परस्परम् ।
शतधन्वन्तरायामां विस्तारे षष्टिसम्मिताम् ॥ ११६

शङ्कुगर्तदृषाद्रिक्तां कण्टकादिविवर्जिताम् ।
अपांसुलां समां श्लक्ष्णां पूर्वभागोन्नतां मनाक् ॥ ११७

नर(व)कुम्भावृतां कुन्दैर्मध्यद्वारद्वयाङ्किताम् ।
तोरणौ द्वौ प्रकुर्वीत द्वारयोस्सुमनोहरौ ॥ ११८

प्राङ्मुखां वोदङ्मुखां वा बाह्यालीं परिकल्पयेत् ।
पूर्वाभिमुखबाह्याली दक्षिणामध्यभागतः ॥ ११९

उपान्तवर्तुलं स्निग्धं कुर्यादालोकमन्दिरम् ।
उच्चाधिष्ठानमूर्ध्वस्थं करिभिः परिवेष्टितम् ॥ १२०

विशालं च सुरम्यं च पृष्ठभित्तिसमन्वितम् ।
सुधाधवलितैः स्तम्भैः काञ्चनैः परिशोभितम् ॥ १२१

नानावर्णवितानाढ्यं काचकुट्टिमकल्पितम् ।
परिघायां परिस्तीर्णैः फलकैः कृतमार्गकम् ॥ १२२

निश्रेणिकल्पितारोहं वारणानां निवारणम् ।
गेहमन्यत्प्रकुर्वीत परिघायास्तु बाह्यतः ॥ १२३

ईपत्पाश्चात्यदेशे तु दक्षिणं भागमाश्रितम् ।
परिघावेष्टितं तुङ्गं चित्रभित्तिसमन्वितम ॥ १२४

सुरम्यं सुविशालं च परमं मण्डितं शिवम् ।
आलोकमन्दिरस्याग्रे लीलावीथीं प्रकल्पयेत ॥ १२५

निखातैरष्टभिः स्तम्भैः पार्श्वद्वयनिवेशितैः ।
स्थूलदीर्घार्गळद्वन्द्वां दृढकीलकधारिणीम ॥ १२६

द्विपवक्षस्थलोत्सेधामन्तरारानिसंयुताम् ।
अन्यामीदृग्विधां कुर्याद्द्वाराद्यैरुपशोभिनीम ॥ १२७

पूर्वद्वारसमीपे वा सुतरादिसमाश्रिताम ।
एवं लक्षणसंयुक्तां बाह्याळीं परिकल्प्य च ॥ १२८

॥ इति गजविनोदनार्थकबाह्याळीप्रकरणं समाप्तम् ॥



## ॥ अथ गजविनोदविधिः ॥

—o—

महत्तरेण विज्ञप्तः कृतदेवार्चनक्रियः ।
आघोष्य डिण्डिमं राजा पुरवीथ्यां चतुष्पथे ॥ १२९

तुन्दिलैर्गर्भिणीबृन्दैर्बालपादाङ्गकुञ्चितैः ।
नागन्तव्यं न गन्तव्यं कौतुकादर्शनोत्सुकैः ॥ १३०

विषमापतनो नागो ह्ययन्त्रीकृतपादवान् ।
अन्यच्च घर्षणं कुर्याद्यः कश्चित्पादवेगवान् ॥ १३१

धनलुब्धो द्विपस्याग्रे स धावतु स धावतु ।
उत्तमो मध्यमो हीनस्त्रिविधः परिकारकः ॥ १३२

एतेषां लक्षणं वक्ष्ये जवोत्कर्षात्पृथक् पृथक् ।
प्रथमा द्विपभूमिः स्यान्मध्यमा नृपतेर्मही ॥ १३३

तृतीया परिकारस्य भूमिरेवं त्रिधा मता ।
प्रथमाया द्वितीयायां हस्तिनिष्क्रामनं भुवि ॥ १३४

तृतीयायां परित्यज्य यो धावति स उत्तमः ।
मध्यमस्य च नागस्य विधिना प्राक्कृतेन यः ॥ १३५

पुरो धावति स ज्ञेयो मध्यमः परिकारकः ।
कनिष्ठकस्य नागस्य प्रागुक्तविधिना तु यः ॥ १३६

अग्रे धावति स ज्ञेयः कनिष्ठः परिकारकः ।
अग्रिमस्य पदाङ्कस्य पश्चाद्यः पुरतो भवेत् ॥ १३७

ज्ञेयस्स तूत्तमजवो वाजिनामपि धावकः ।
ईदृशान्तरसंस्थं वा परिकारं जवाधिकम् ॥ १३८

पञ्चाशदन्तरे हस्ति दन्त्यस्मादुत्तमो जवे ।
पौरस्त्यस्य पदाङ्कस्य पाश्चात्यो मध्यमो यदि ॥ १३९

जवेन यः पुरो यायात्पातयेद्दशमे पदे ।
उत्तमो मध्यमां गच्छेन्मध्यमश्चाधमामपि ॥ १४०

अधमो निजभूम्यन्तन्धावयेद्युगीजं क्रमात् ।
अनया विधया चैव निजभूमिं नयन् जवी ॥ १४१

एवं कर्तुं तु शक्तोऽपि हतेऽस्मिन्वारणो जवी ।
वहुहस्तो यदाऽऽधो(चो)रः पुरो धावति हस्तिनः ॥ १४२

गतापराधो जीवेच्चेद्धतः पापात्प्रमुच्यते ।
जवाधिकस्य नागस्य वाजिनो धावतः पुरः ।
सीकराः सादिनः पृष्ठं निर्गतस्सादिनो जयः ॥ १४३

॥ इति गजक्रीडनकं समाप्तम् ॥

## ॥ अथ सृणिघातलक्षणम् ॥

—o—

सृणिपार्श्वेन यो घातस्स भवेत्ताडिताभिधः ।
आराघातस्त्वराघातस्तोदस्स इह गद्यते ॥ १४४

द्वाभ्यां कराभ्यामुत्क्षिप्य क्षिप्तमुत्क्षिप्तकस्स्मृतः ।
आरक्षा द्वादश प्रोक्तास्सृणिघाताश्रया गजे ॥ १४५

कुम्भाग्रे विदुसंज्ञे तु तदधश्च वितानके ।
वितानयोर्बहिः पार्श्वेवग्राहावुदाहृतौ ॥ १४६

वितानावग्रहाभ्यां च निदानं समुदाहृतम् ।
कर्णाग्रशिरसः सन्धिः श्रोत्रसन्धिरुदाहृतः ॥ १४७

तस्मादग्रे कर्णसन्धिस्तत्पश्चात् कर्णमूलकम् ।
पुरः सारयितुं नागं क्रमशोऽग्रेण वेधयेत ॥ १४८

कर्णमूले तदग्रोक्ता तोदनाऽऽत्मविचक्षणैः ।
अवग्रहे विताने च पश्चात् सारयितुं गजम् ॥ १४९

अङ्कुशाग्रेण यो घातः सोपकर्ष इति स्मृतः ।
बलिनं सादिनं दन्ती सादी क्षिपति दन्तिनम् ॥ १५०

अन्यो हरति दण्डेन तत्राशक्तः पराजितः ।
घातभेदाः समाख्यातास्तथा जयपराजयौ ॥ १५१

इति गजशास्त्रे पालकाप्ये बाह्यालिप्रकरणं नाम
दशमं प्रकरणं सम्पूर्णम् ॥

॥ इति श्रीमद्गजशास्त्रं सम्पूर्णम् ॥

॥ श्रीसाम्बशिवार्पणमस्तु ॥

॥ श्रीगणेशाय नमः ॥

# ॥ अथ गजशास्त्रानुबन्धः ॥

## ॥ अथ गजबलप्रशंसा ॥

—o—

मूर्तिमान्विजयो राज्ञां कुञ्जरा मदविह्वलाः ।
प्रत्यक्षदेवता नागा देववाह्या यतस्ततः ॥ १

विनयग्रहणे शिष्या भृत्याश्छन्दोऽनुवर्तने ।
विक्रीताश्च प्रदत्ताश्च यान्ति तूष्णीं तु दासवत् ॥ २

प्राकारगोपुराट्टाळकवाटोद्घाटनादिषु ।
भञ्जने मर्दने चैव नागा वज्रोपमास्स्मृताः ॥ ३

मोक्षात्परा गतिर्नास्ति नास्ति विद्या श्रुतेः परा ।
नास्ति विष्णोः परं दैवं नास्ति यान गजात्परम् ॥ ४

यद्वद्वनमसिंहं तु यद्वद्राष्ट्रमराजकम् ।
यद्वच्छौर्यमशस्त्रास्त्रं तद्वत्सैन्यमकुञ्जरम् ॥ ५

एकशस्त्रप्रहारेण म्रियतेऽश्वो नरोऽपि वा ।
सहेन्महाप्रहाराणां शतं युद्धेषु वारणाः ॥ ६

रक्षन्ति पक्षं मुदिताः स्वकीयं रणमूर्धनि ।
मृद्नन्ति सैन्यं कुपिताः परेषां लीलया गजाः ॥ ७

जयत्येकोऽपि मातङ्गः षट्सहस्राणि वाजिनाम् ।
यस्मात्तस्माद्गजा भूपैः संग्राह्या विजयेप्सुभिः ॥ ८

शरतोमरचक्रैश्च गजस्कन्धहता नराः ।
क्षणात्स्वर्गं प्रयान्त्येव तस्मात्पूज्यतमा गजाः ॥ ९

एवंविधान्गजान् जात्यान् वनादानाय्य पार्थिवः ।
शूरानारुह्य तान्कुर्याद्वशगानतिनिर्भरम् ॥ १०

॥ इति गजबलप्रशंसा समाप्ता ॥

## ॥ अथ गजग्रहणयोग्यायोग्यकालः ॥

तिथिनक्षत्रवारेषु प्रशस्तेषु मुहूर्तके ।
सुप्रशस्ते शुभैर्दृष्टे गृहीतास्शुभदा गजाः ॥ १

भवन्ति कर्मणां योग्या बलवन्तो निरामयाः ।
मुहूर्ते सूर्यदृष्टे तु शूराः परबलार्दनाः ॥ २

निन्दितेष्वपि कालेषु सर्वेषु दिवसेषु च ।
तिथिनक्षत्रवाराणां तथा पक्षस्य सन्धिषु ॥ ३

छिद्रेष्वपि च सन्ध्यासु न गृह्णीयात्तु वारणान् ।
क्रूरग्रहोपसृष्टेषु नक्षत्रेषु ग्रहेष्वपि ॥ ४

प्रशस्तेष्वपि कालेषु नैव ग्राह्या मतङ्गजाः ।
येषु लक्षणसम्पन्नाः प्राणवन्तोऽपि वारणाः ।
विपर्ययन्नतस्तेषु न ग्राह्या वारणा ध्रुवम् ॥ ५

॥ इति गजग्रहणयोग्यायोग्यकालः समाप्तः ॥



## ॥ अथाग्राह्यगजलक्षणम् ॥



इमे तु न गृहीतव्या हीनाश्चाप्यधिकाश्च ये ।
तल्क्षीणास्त्रिके भग्ना वृद्धाश्चैवातुरास्तथा ॥ १

प्रोतदन्ताधिकाङ्गाश्च समुष्का धेनुनिस्पृहाः ।
विकृताङ्गाश्च ये नागा गर्भिणी वा सपोतका ॥ २

ये महालक्षणाश्चापि दिव्यजातिगुणान्विताः ।
श्वेतातिरक्तारक्ताभाः कृपणास्सूर्यसन्निभाः ॥ ३

कुशाभा बर्हिसंकाशाश्चतुर्दन्ताश्च ये गजाः ।
अरण्यस्थास्तु ते नित्यं क्षेमारोग्यसुवृष्टिदाः ॥ ४

यूथपश्चापि न ग्राह्यो गजराजस्स पार्थिव ।
गन्धहस्तिप्रभृतयस्तिष्ठन्त्यस्याज्ञया वने ॥ ५

प्राप्तैश्वर्योऽपि न ग्राह्यो बालोऽपि न कदाचन ।
घ्नन्ति ये करिणः पापा घातयेत्तान्महीपतिः ।
दैवान्मृतेषु नागेषु तेषां दन्तान् समाहरेत् ॥ ६

॥ इत्यग्राह्यगजनिरूपणं समाप्तम् ॥



## ॥ अथ गजवयोनिर्णयलक्षणम् ॥



स्निग्धदन्तनखरोमचक्षुषो
दीर्घकर्णकरवालवंशिनः ।

प्राक्प्रदेशपरिपूर्णलक्षणाः
    हस्तिनस्सुशिरसश्चिरायुषः ॥                                      १

सप्त रक्ततनवः षडुन्नताः
    सुप्रसन्नमनसः सुगन्धयः ।
नीलनीरदनिभा विराविणो
    द्वित्रिरोमनिलयाश्चिरायुषः ॥                                      २

पुष्करद्वितयं कोशो जिह्वोष्ठगुदतालवः ।
सप्तैते रक्ततनवः यस्य स द्विरदोत्तमः ॥                                      ३

मस्तकद्वितयं दन्तावाननं वंश एव च ।
षडेते चोन्नता यस्य स गजो गजवाहनः ॥                                      ४

सहस्रेष्वपि नागेषु कश्चिदेभिस्समन्वितः ।
समस्तलिङ्गो न गजो भवतीतीह निश्चयः ॥                                      ५

त्रीणि षट् पञ्च वाष्टौ वा लिङ्गान्येतानि यस्य वै ।
आयूंषि लभते तावद्दीर्घमित्यस्य मे मतिः ॥                                      ६

त्रीणि यस्य तु दृश्यन्ते लिङ्गानि मनुजाधिप ।
तृतीयां स चतुर्थीं वा दशां प्राप्य विनश्यति ॥                                      ७

पञ्च यस्य तु लिङ्गानि दृश्यन्ते नयकोविद ।
सदशां पञ्चमीं प्राप्य षष्ठीं वापि विनश्यति ॥ ८

षडेव यस्य लिङ्गानि दृश्यन्ते नृपसत्तम ।
सप्तमीं तु दशां प्राप्य सोऽष्टमीं वा विनश्यति ॥ ९

सप्त यस्य तु लिङ्गानि दृश्यन्ते मनुजाधिप ।
नवमीं दशमीं वापि दशां प्राप्य विनश्यति ॥ १०

अष्टौ यस्य तु लिङ्गानि दृश्यन्ते शास्त्रनिश्चयात् ।
एकादशीं दशां प्राप्य द्वादशीं वा विनश्यति ॥ ११

एवं प्रोक्तविधैर्लिङ्गैस्समस्तैर्वा समीक्ष्य तु ।
आयुस्संविभजेद्धीरः दीर्घमध्यकनीयसः ॥ १२

अर्धैस्समस्तैरल्पार्धैः प्रदेशैः पूर्वकीर्तितैः ।
विभजेत समीक्ष्यायुस्तथा यस्य न यस्य च ॥ १३

चतुर्थी मृगजात्यस्य परमायुरिहोच्यते ।
अष्टमी मन्दजातेस्तु परमायुः प्रकीर्तितः ॥ १४

द्वादशी भद्रजात्यस्य परमायुरिहोच्यते ।
वारणानां तु मिश्राणामायुस्सञ्चिन्त्य योजयेत् ॥ १५

एत एवाल्पलिङ्गत्वान्नक्षत्रग्रहपीडनात् ।
भवन्त्यल्पायुषो नागा ज्ञेया दीर्घायुषोऽन्यथा ॥ १६

आश्रिते मृगजात्यस्तु भोजने मन्दलक्षणः ।
अवगाहे तु भद्रस्तु दशायां मरणं व्रजेत् ॥ १७

त्रित्रिंशाब्दं वर्धमानं विदुरायुष्यकं बुधाः ।
अतःपरं स्थितं चापि षष्टेरूर्ध्वं क्षयं विदुः ॥ १८

उदयं च तथोदर्कं क्षयं च त्रिविधं वयः ।
वर्धमानं स्थितं केचिदीहमानं क्रमाद्विदुः ॥ १९

आहाराणामलाभेन पीडनादङ्कुशादिभिः ।
हीनप्राणा भवन्त्येव राज्ञः परिभवेन च ॥ २०

वयोविधिः प्राज्ञजनाभिपूज्यः
क्रमेण राजन् कथितो यथावत् ।
योगीन्द्रदेवासुरकोविदानां
वानो(व्यामो)हकारी नवकामनामा ॥ २१

॥ इति गजवयोनिर्णयलक्षणं समाप्तम् ॥

## ॥ अथ हस्तिनीलक्षणम् ॥

—— o ——

हस्तिनीनां च वक्ष्यामि शुभलक्षणसम्पदम् ।
सून्नतौ मस्तकौ यस्याः सुविभक्तौ स्तनावपि ॥ १

सुकेशी कलविङ्काक्षी स्वच्छस्निग्धनखी च या ।
महोरस्का महाश्रोणी सुभगा चारुगामिनी ॥ २

रक्तोत्पलदलाभा च पद्मकिञ्जल्कसन्निभा ।
हस्तिनी तादृशी राजन् यूथपं जनयेद्द्विपम् ॥ ३

यस्य सा हस्तिनीराज्ञः स्त्रीषु सौभाग्यवान्भवेत् ।
गन्धमाल्यानुलेपाद्यैर्वशां पर्वसु पूजयेत् ॥ ४

## ॥ अथ करिणीदोषाः ॥

—— o ——

किलासजङ्घा दुर्गन्धा कपिला शत्रुवर्धिनी ।
पृथुस्कन्धान्तरा ह्रस्वसंस्थानादायतानना ॥ ५

लम्बत्वङ्निन्दिता धेनुस्स्थूलह्रस्तनखी च या ।
ह्रस्वकर्णाऽरालकेशी सर्पाक्षी मत्कुणोपमा ॥ ६

या न वीजति कर्णाभ्यां नेत्रे तु विवृणोति या ।
नैव तां ग्राहयेद्राजा न च द्वारि प्रवेशयेत् ॥ ७

राज्ञः कोशस्य राष्ट्रस्य पुरस्यान्तःपुरस्य च ।
विनाशाय भवत्येव वाहनं च विनाशयेत् ॥ ८

॥ इति हस्तिनीलक्षणं समाप्तम् ॥



## ॥ अथ गर्भिणीग्रहणनिषेधः ॥

—— ० ——

सबालां वा गर्भिणीं वा न गृह्णीयात्कदाचन ।
तृप्ता स्वच्छन्दचारेण करिणी शुभदायिनी ॥ ९

विरहाद्यूथनाथस्य यूथस्य च वियोगतः ।
व्यायामाहारबन्धैश्च परिक्लिष्टा च गर्भिणी ॥ १०

क्रुद्धा शपेन्महाराज तत्स्थानं परिवर्जयेत् ।
ग्रामे प्रसूतिर्नागानां गर्भाधानं तथैव च ॥ ११

सर्वसत्वविनाशाय राष्ट्रक्षोभाय चादिशेत् ।
तं नाशयति षण्मासाद्राज्यं राजानमेव च ॥ १२

सेनां च महिषीं पुत्रं वाहनं च न संशयः ।
तस्याश्शापेन राज्ञस्स्यान्महिषी पुत्रनाशनम् ॥ १३

॥ इति गर्भिणीग्रहणनिषेधः समाप्तः ॥



## ॥ अथ गर्भिणीलक्षणम् ॥

—o—

पुष्पमन्तर्गतं विद्धि हस्तिनीनां निसर्गतः ।
रजोऽन्तरस्स्रवति त्वासां तिर्यग्योनिस्वभावतः ॥ १

अदृश्यमार्तवं विद्धि हस्तिन्यां हर्षकारि तत् ।
बहिर्न दृश्यते राजन् मासि मास्युद्भवं रजः ॥ २

द्वादशाब्दं समारभ्य पञ्चाशद्वत्सरावधि ।
गर्भं गृह्णाति करिणी नवाब्देऽस्या रजो भवेत् ॥ ३

सुखेन वर्धिता तस्मिन्गर्भं गृह्णाति हस्तिनी ।
अतःपरं प्रवक्ष्यामि ऋतुमत्यास्तु लक्षणम् ॥ ४

छविः प्रसन्ना भवति योन्या विवृतपीनया ।
सहेन्द्रियं विसृजति मूत्रप्रक्लिन्नया मुहुः ॥ ५

समीपस्थां न सहते हस्तिना हस्तिनीं पराम् ।
यूथं हित्वाऽन्यतो गच्छेत्पांसुपङ्कजलप्रिया ॥ ६

कटङ्कुरं पल्लवं च कबळं च द्विषत्यसौ ।
नाभ्युपैति गजाभ्याशं तस्मै भक्ष्यान्प्रयच्छति ॥ ७

यतो गजश्च व्रजति तस्याग्रे ह्यवतिष्ठति ।
करवक्त्रोष्ठमेढ्राणां परिजिघ्रति सर्वशः ॥ ८

संघ्राय चास्य गात्राणि गुदादीनि विशेषतः ।
तथा विषाणमालिङ्ग्य हृष्टा नागस्य तिष्ठति ॥ ९

वालमुत्क्षिप्य सन्तिष्ठेद्भुग्नग्रीवाशिरःकरा ।
प्रभ्रष्टकर्णवदना निष्पिनष्टि करं भुवि ॥ १०

एभिर्विद्यादृतुमतीं लिङ्गैर्गजवशां बुधः ।
ऋतुकाले च संप्राप्ते धेनुकां प्लवते गजः ॥ ११

तथा मैथुनयोगात्तु ऋतुस्तस्या निवर्तते ।
गर्भावाप्त्याऽथ करिणी मैथुनं नाचरत्यसौ ॥ १२

प्रसूतिर्द्वादशे मासे विपरीतमतोऽन्यथा ।
धेनुर्वर्धकिनी चैव तथा नाशोरिकाऽपि च ॥ १३

एकद्वित्रिसमा गर्भं धारयन्ति यथाक्रमम् ।
लब्धबीजा ततो मुक्ता प्रहर्षेण श्रमेण च ॥ १४

हस्तिनी दन्तिनं दृष्ट्वा शनैर्विष्टभ्य गच्छति ।
कण्डूयते तथा देहं तरुमाश्रित्य सर्वथा ॥ १५

अवगाहेत पङ्काम्बु शीतच्छायां च सेवते ।
गच्छन्तमारात्सर्पन्तं द्वेष्टि चैव मतङ्गजम् ॥ १६

एभिर्लिङ्गैर्विजानीयाल्लब्धगर्भां च हस्तिनीम् ।
अतःपरं प्रवक्ष्यामि गर्भिण्या लक्षणं शृणु ॥ १७

आद्ये मासे गजं द्वेष्टि कषायमधुरप्रिया ।
मृदुता जृम्भणपरा द्वितीये कललावहा ॥ १८

प्रक्लिन्नयोनिरपरे मृदुशैत्यप्रियाऽलसा ।
चतुर्थे मन्दगमना मन्दमन्दोपवेशिनी ॥ १९

पञ्चमे पूर्णजठरा पांसुपङ्कजलप्रिया ।
यूथपातं मृदु समं देशं षष्ठे निषेवते ॥ २०

अत्यर्थं जृम्भणपरा मन्दवेगा च सप्तमे ।
द्विजान्दशति गम्भीरतोयाप्लावनतत्परा ॥ २१

अष्टमे नवमेऽत्यर्थं पूर्णकुक्षिस्तनान्विता ।
म्लानानना शीर्णकेशा दशमे क्लान्तलोचना ॥ २२

निम्नमेकादशे द्वेष्टि संवेशोत्थानविक्लबा ।
उन्नद्धनाभिरलसा गुरुगर्भतया वशा ॥ २३

मृग्या हि द्वादशे मासे योनिश्च विवृता भवेत् ।
अगर्भिणीं सगर्भेति गर्भिणीमप्यगर्भिणीम् ॥ २४

सम्यग्विभागकुशलः मिथ्या यस्तु वितर्कयेत् ।
कुर्यात्स चोभयोः पीडां हस्तिन्याः पार्थिवस्य च ॥ २५

गर्भवायुर्यदा शुक्लं द्विधा कुर्याच्च पोतकौ ।
तदा भवेतां पोतक्यौ यदा रक्तं द्विधा कृतम् ॥ २६

पोतको दक्षिणे कुक्षौ वामे कुक्षौ तु पोतकी ।
मध्ये नपुंसकमिति तद्ज्ञा जानन्ति निश्चयात् ॥ २७

धातूनां गर्भवायोश्च चित्तस्यापि च दोषतः ।
कुब्जा हीनातिरिक्ताङ्गा ह्रस्वा दीर्घाश्च वामनाः ।
काणादयश्च विकृता जायन्ते हस्तियोनिषु ॥ २८

॥ इति गर्भिणीलक्षणं समाप्तम् ॥

## ॥ अथ गन्धहस्तिलक्षणम् ॥

—o—

शृणु सर्वं महाराज संभवं गन्धहस्तिनाम् ।
यथा शुभश्च दानानां वसन्तस्तु निरुच्यते ॥ १

सप्तवर्षाण्यतिक्रम्य जायतेऽथ विशांपते ।
तदा सुखञ्चरो नाम वायुर्वाति मदावहः ॥ २

तदा वसन्तकालोऽयं लोके ह्युत्सवकारकः ।
तदा त्विराया भवति मोदयत्यखिलं जगत् ॥ ३

तस्मान्माद्यन्ति भूतानि वारणा अपि धेनुकाः ।
प्रभिन्नायां यदा गर्भः प्रभिन्नस्येह दन्तिनः ॥ ४

जायते गन्धसंयुक्त्या गन्धहस्ती स उच्यते ।
तं गन्धहस्तिनं विद्यान्नृपतेर्विजयावहम् ॥ ५

संबद्धमदयुक्तस्य प्राप्तैश्वर्यस्य हस्तिनः ।
गन्धस्स मधुना तुल्यः स्वेदमूत्रपुरीषजः ॥ ६

स्वेदमूत्रपुरीषाणि मदं चैव मतङ्गजाः ।
यस्याघ्राय विमाद्यन्ति तं विन्द्याद्गन्धहस्तिनम् ॥ ७

छदिर्निरायता मृद्वी यस्य पुष्करसन्निभा ।
तं गन्धहस्तिनं विन्द्यात् नृपतेर्विजयावहम् ॥     ८

॥ इति गन्धहस्तिलक्षणं समाप्तम् ॥



## ॥ अथ नवगृहीतगजोपचारः ॥

तृणौषधिफलाहाराः वने स्वैरसुखोचिताः ।
बद्धा दीर्घायुषो नागाः दुःखैश्शारीरमानसैः ॥     १

न वन्यानिव राजेन्द्र प्राणान्धारयितुं क्षमाः ।
तस्माद्वैद्यैर्महामात्यैर्यथा शास्त्रोपचारतः ॥     २

बन्धनात्प्राणसन्देहात्परिरक्ष्याः प्रयत्नतः ।
उचितो वनवासो यस्तस्यालाभेन दन्तिनाम् ॥     ३

दोषाः कुप्यन्त्यसात्म्यत्वादपूर्वस्येह भोजनात् ।
पुष्कलां वा विधां लब्ध्वा पुनस्तां न लभेत चेत् ॥     ४

लाभालाभेन नागानामामयश्च महीपते ।
अभोजनादत्यशनाद्दुस्स्थानशयनादपि ॥     ५

अकामाशनपानाच्च बन्धेन च वधेन च ।
लवणस्यातियोगेन तथा ह्यलवणेन च ॥ ६

एतैस्तु रोगा जायन्ते दोषाः कोपसमुद्भवाः ।
वातिकाः पैत्तिकाश्चैव श्लेष्मिकास्सान्निपातिकाः ॥ ७

तस्मादरण्यादानीतान्गजान् सम्यगुपाचरेत् ।
न क्वचिद्वनदुःखार्तं तोयद्रोणीषु पाययेत् ॥ ८

समन्तात् शीतलैस्तोयैर्यन्त्रमुक्तैः प्रसेचयेत् ।
कर्णप्रमाणे तोये च नागं प्रातः प्रवेशयेत् ॥ ९

अचिराच्छीतसाधुत्वादेते हि वनजं सुखम् ।
विस्मरन्ति महाराज ग्लान्यादिश्चोपशाम्यति ॥ १०

यामार्धनाडिकाशिष्टे दिने निस्तारयेज्जलात् ।
आशास(सेच)येत्तदा नागं शतधौतेन सर्पिषा ॥ ११

सेचयेत्सर्वगात्राणि दिनमध्ये विचक्षणः ।
ततो दिनद्वयादूर्ध्वं घृतेन च प्रसेचयेत् ॥ १२

वर्जयित्वा शरद्ग्रीष्मौ सेकांस्त्रीन् सार्वकालिकान् ।
शीतार्थं(र्तं)सेचयेन्नागं तैलेनैकेन कोविदः ॥ १३

कटङ्करं वेणुपत्रं पल्लवं यवसानि च ।
इक्षून्बिसमृणाळानि मधुरांश्च महीरुहः ॥ १४

कदळीकन्दशालूकशृङ्गाटककशेरुकम् ।
मनःप्रीतिकरं दद्यादेतत्सन्तापशान्तये ॥ १५

नवग्रहाणामप्यन्यं विधायोगविधिं शृणु ।
आरण्यानामामभक्ष्यैस्सात्म्यादन्यैरसात्म्यतः ॥ १६

पूर्वं नवग्रहे नागे दापयेत्तृणतण्डुलम् ।
पनं पलं विवर्धेत यावत्तत्कुडुपं भवेत् ॥ १७

कुडुपं तण्डुलानां तु गुडेन च समन्वितम् ।
प्रत्यहं वर्धयेद्धीमान् यावदाढकतण्डुलम् ॥ १८

ग्रीष्मकाले विशेषेण रूक्षत्वात्तृणदारुणि ।
तण्डुलान्गुडसंयुक्तानुपनाह्य प्रदापयेत् ॥ १९

तेनास्य दीप्यते वह्निर्बलं तेजश्च वर्धते ।
तण्डुलान्लवणेनैवं दापयेदग्निदीप्तये ॥ २०

तण्डुलान्मूलसंसृष्टान्परागांश्च गुडान्वितान् ।
लवणेन युतान्सम्यक् सततं दापयेद्भिषक् ।
काले जलावगाहं च यथर्तुसमुपाचरेत् ॥ २१

॥ इति नवगृहीतगजोपचारः समाप्तः ॥



## ॥ अथ हस्तिवर्धनप्रकारः ॥

— — o——

मुख्यं दन्तिबलं राज्ञां समरे विजयैषिणाम् ।
तस्मान्निजबले कार्या बहवो वारणोत्तमाः ॥ १

ततस्तेषां महीपालः पोषणे यत्नवान्भवेत् ।
राजा तान्घृतसंमिश्रैर्दध्ना वा परिलोडितैः ॥ २

पिष्टैर्मांसरसोपेतैरिक्षुकाण्डैस्सुधासमैः ।
शुक्लपूर्णेन्दुसङ्काशैश्शालियूषैर्मनोहरैः ॥ ३

नवगोधूमकुल्माषैर्यावनालैः फलान्वितैः ।
द्विकालं जलपानैश्च तत्तत्तोयावगाहनैः ॥ ४

मृत्तिकामृदुशय्याभिः पांसुक्रीडनकैरपि ।
प्रीणयेद्द्विरदान्नित्यं यथा तुष्टा भवन्ति ते ॥ ५

बन्धनात्ताडनाद्द्यवनसौख्यविचिन्तनात् ।
असात्म्याशनतोऽजीर्णादायासाज्जागरादपि ॥ ६

जायन्ते करिणां रोगास्तेषां कार्यं विचिन्तयेत् ।
वनोद्भवैरोषधीभिरौषधैश्च यथाविधि ॥ ७

चूर्णं दशपलं दद्यात्प्रत्यहं तु विषाणिनाम् ।
कल्कं तद्विगुणं क्वाथमाढकं परिभाषितम् ॥ ८

दद्यादष्टगुणं तोयं सृत्वा क्वाथसमं हरेत् ।
प्रबोधकालेकाले च मूत्रेमूत्रे च दन्तिनाम् ॥ ९

नवबन्धनदुःखार्तं तोयं द्रोणपु(न) पाययेत् ।
प्रक्षाळयेत्ततो नागं शतधौतेन सर्पिषा ॥ १०

सेचयेत्सर्वगात्रेषु दिनं सायं विचक्षणः ।
ततो दिनद्वयादूर्ध्वं घृतेनैव प्रसेचयेत् ॥ ११

शीतार्तं सेचयेन्नागं तैलेनैकेन कोविदः ।
ह्रासयेत्क्रमशस्तस्य कालं तोयावगाहनात् ॥ १२

इक्षून्बिसमृणाळानि मधुरांश्च महीरुहान् ।
कदळीकन्दशालूके शृङ्गाटककशेरुके ॥ १३

मधूककोलवीराणां मूलमारग्वधस्य च ।
मनःप्रीतिकरं दद्यादन्तस्सन्तापशान्तये ॥ १४

॥ इति हस्तिवर्धनप्रकारः समाप्तः ॥



## ॥ अथ गजशिक्षणम् ॥

—o—

पुरोदेशे त्रयस्स्थाप्याः कर्णदेशे नरावुभौ ।
पश्चाद्भागे तथा द्वौ च सप्तस्थाप्या नराः क्रमात् ॥ १

पक्षयोरुभयोः स्थाप्ये करिण्यावतिशिक्षिते ।
आरोहकैस्ततस्सर्वैर्नियम्योऽसौ मतङ्गजः ॥ २

शिक्षयेच्च ततो भाषां कर्मज्ञानाय दन्तिनाम् ।
अनालस्येन निर्बन्धात्प्रत्यहं गजपोषकः ॥ ३

[गजशिक्षणभाषा तु पालकाप्यादिकीर्तिता ।
प्रशस्ता गजशिक्षार्थं ज्ञातव्या गजपोषकैः ॥]

प्राकृताभिश्च भाषाभिः देशभाषाभिरेव च ।
कर्मावबोधकाभिस्तु वारणं प्रतिबोधयेत् ॥ ४

एवं संशिक्षितो नागः वध्यावध्येषु कर्मसु ।
जयत्येकोऽपि संग्रामे नरवाजिगजान् बहून् ॥ ५

शुभलक्षणसंयुक्ताः कुञ्जरा बहुजातयः ।
शिक्षितास्सर्वकर्माणि बले कार्या महीभुजाः ॥ ६

॥ इति गजशिक्षणं समाप्तम् ॥



## ॥ अथ गजारोहणलक्षणम् ॥

---o---

इदानीं तु प्रवक्ष्यामि गजारोहणलक्षणम् ।
निषादी त्रिविधो ज्ञेयः रेखायुक्तिबलैर्युतः ॥　१

अधमो मध्यमः श्रेष्ठः सर्वैस्तैरुत्तमोत्तमः ।
वारणस्यानुगुण्येन रेखावान्वर्ततेऽनिशम् ॥　२

आत्मेभयोरानुगुण्याद्वर्तते यस्स युक्तिमान् ।
आत्मबुद्धिबलेनैव वर्तते यस्स सत्ववान् ॥　३

आरोहणं चाष्टविधं दशधा चावरोहणम् ।
गात्राभ्यामपराभ्यां च पार्श्वाभ्यामपि रज्जुभिः ॥　४

आरोहणं मुखेनापि तथैव ह्यवरोहणम् ।
उत्कृष्टं मध्यमं चापकृष्टं चेति त्रिधासनम् ॥　५

ग्रीवाककुदयोर्मध्ये प्रोक्तमुत्कृष्टमासनम् ।
ककुदस्योपरिष्टात्तु मध्यमासनमिष्यते ॥　६

अपकृष्टासनं स्कन्धादधस्तात्परिकीर्तितम् ।
प्रविश्य च तमुत्कृष्टं मध्यं मध्यममासनम् ॥　७

पादाग्रेणावकृष्टं स्यात् आसनं त्रिविधं स्मृतम् ।
मन्दादिजातौ युद्धे च प्रोक्तमुत्कृष्टमासनम् ॥ ८

भद्रादिजातौ भावे च मध्यमासनमुच्यते ।
अवाग्रे मृगजातौ तु शिरोविधुतितत्परे ॥ ९

अवकृष्टासनं शस्तं मातङ्गानां यथाक्रमम् ।
समं दृढं च संलग्नं जानुसन्धिसमाहितम् ॥ १०

आसनत्रितयेऽप्येवं सौष्ठवं परिकल्पयेत् ।
प्रज्ञापनार्थः प्रणिधिः स ज्ञेयो गजयन्तृभिः ॥ ११

पादवागङ्कुशानां तु चोदना प्रणिधिर्मता ।
ग्रैवेयप्रोतचरणावच्छिद्रौ सुसमाहितौ ॥ १२

पार्ष्ण्यङ्गुष्ठं दृढं कृत्वा भवेत्स्थाणुरिवाचलः ।
विन्यस्य वामहस्तं तु प्रतोळ्याया निबन्धने ॥ १३

मूलमङ्कुशदण्डस्य दक्षिणेन प्रगृह्य च ।
ऊरुभ्यां दृढबन्धाभ्यामस्तब्धनयनो भवेत् ॥ १४

उपविष्टो गजे चैव षट्सु मार्गेषु चोदयेत् ।
ग्रामे चैव महारण्ये वने कक्षे जले स्थले ॥ १५

समे च विषमे चैव काले वाऽकाल एव वा ।
मातङ्गानां लक्षणज्ञः प्रणिधित्रयकोविदः ॥ १६

आरोहणावरोहज्ञः मातङ्गानां हिते रतः ।
आसनत्रयविद्दक्षः चिकित्सितनिमित्तवित् ॥ १७

सुशरीरस्त्वरोगश्च यातायातविभागवित् ।
ईदृग्विधगुणोपेतः महामात्रः प्रशस्यते ॥ १८

सम्यक्तीर्थात्तशास्त्रार्थः प्रयोगेषु कृतश्रमः ।
गजेङ्गितज्ञश्चेष्टाज्ञः गजारोहः प्रशस्यते ॥ १९

॥ इति गजारोहणलक्षणं समाप्तम् ॥



## ॥ अथ आसनलक्षणम् ॥

——o——

त्रीण्यासनानि पुरतः पश्चात्पञ्च महीपते ।
ग्रीवाककुदयोर्मध्ये प्रोक्तमुत्कृष्णमासनम् ॥ १

ककुदस्योपरिष्टात्तु मध्यमासनमिष्यते ।
अपकृष्टासनं स्कन्धादधस्तात्परिकीर्तितम् ॥ २

उत्कृष्टमासनं ज्ञेयमुदग्रे च मतङ्गजे ।
आसनं मध्यमं प्रोक्तं समाग्रे च मतङ्गजे ॥ ३

अपकृष्टासनं योग्यमवाग्रे च मतङ्गजे ।
उत्कृष्टमासनं भद्रे मुष्टियुद्धे चलासने ॥ ४

विषमांसे मृगे राजन् यतप्रज्ञापनेऽपि च ।
अपकृष्टासनं शीर्षधूनने सव्रणांसके ॥ ५

मन्दे दीर्घतनुग्रीवे प्रोक्तं मध्यममासनम् ।
सङ्कीर्णजातौ गदितमासनत्रयमिष्यते ॥ ६

॥ इति आसनलक्षणं समाप्तम् ॥

## ॥ अथ मदाद्युत्पादनौषधप्रयोगः ॥

देवानामप्यृषीणां च त्रैलोक्यजयकाङ्क्षिणाम् ।
तेजोंशैरसृजद्ब्रह्मा पुरा वै मदपूरुषम् ॥ १

विवर्धमानं दृष्ट्वा तं भीतांश्च सुरसत्तमान् ।
वामदेव्येन साम्नातं सान्त्वयन्नददाद्वरम् ॥ २

एतेषामेव तेजोंशैः मदसृष्टोऽसि वै मया ।
भागार्धेन हि तिष्ठ त्वं जङ्गमाजङ्गमेषु वै ॥ ३

द्वितीयार्धेन तिष्ठ त्वं वारणेषु यथासुखम् ।
मङ्गल्यश्च पवित्रश्च लक्ष्मीसौभाग्यवर्धनः ॥ ४

रक्षोघ्नः पुष्टिदश्चैव विजयस्य च कारणम् ।
ऋतुकाले समुत्पन्नः विजयेन विजृंभितः ॥ ५

चराचरेषु सर्वेषु भव त्वं मदपूरुष ।
वारणांस्तु समासाद्य सुतो भव विशेषतः ॥ ६

समदा वारणा ह्येते क्षुत्पिपासे न जानते ।
तेजोबलयुताश्शूरास्संयुक्ता मदसंपदा ॥ ७

उत्साहवन्तः कान्ताश्च भवन्ति विजयावहाः ।
अनृतौ च विजृंभस्व विजयाय महीभृताम् ॥ ८

अप्राप्तत्रिंशदब्देषु वारणेषु विशेषतः ।
मदनागौ यतो राजन्नेकोपादानकारणौ ॥ ९

येन नागस्समुत्पन्नः मदस्तत्प्रभवस्ततः ।
नर्ते गजेभ्यश्शक्ताः स्युर्मदं धर्तुं शरीरिणः ॥ १०

सान्निध्यात्सर्वदेवानां पवित्रो मङ्गळो मदः ।
मदहीना न धावन्ति न युध्यन्ति मतङ्गजाः ॥ ११

मद एव गुणस्तस्मात्तदर्थं यत्नमाचरेत् ।
बृंहणैः कबळैर्वृष्यैस्तथा सञ्चयकारकैः ॥ १२

विस्तारकारकैश्चान्यैर्मुखवर्धनकैरपि ।
करवृद्धिकरैर्योगैः कटवृद्धिकरैरपि ॥ १३

प्रभेदनैर्बन्धनैश्च गन्धवर्णकरैस्तथा ।
दोषोत्पादनकैः पिण्डैर्जातिधात्वनुसारतः ॥ १४

गजानुपचरेद्राजा प्रयत्नादन्नपानकैः ।
बलोच्चटा विदारी च गोक्षुरश्शाल्मली वरी ॥ १५

वाजिगन्धा तु गोक्षीरी गोजिह्वा सितशर्करा ।
हिंस्रा च कुटजं धात्री छिन्ना माषाश्च चूर्णिताः ॥ १६

क्षीरेण संयुतः पिण्डो गजानां **बृंहणः परम्** ।
बला गोक्षुरकूश्माण्डमाषा धात्री शतावरी ॥ १७

उच्चटा कुटजं चूर्णं **बृंहणं** पयसाऽन्वितम् ।
परूषाङ्कोलहिंस्राश्च लक्ष्मणा सिन्धुवल्लिका ॥ १८

चित्रकं सुरसा शिग्रुः काश्मीरी गिरिकर्णिका ।
भूशर्करा वह्निमन्थः शफरी च शतावरी ॥ १९

पूतिकः कर्णिकारश्च व्यस्तारा तैलमम्बुना ।
भल्लातमूलं मूर्वा च विदारी रक्तसैरिका ॥ २०

एतैस्समैः कृतं चूर्णं दधिक्षीरघृतान्वितम ।
देयः प्रतिनये पिण्डो गजानां **मुखवर्धनः** ॥ २१

कृष्णा घोण्टावती गुञ्जा सुवहा गोक्षुरस्सहा ।
शताह्वा मुसली शेलुरतीबलविदारिका ॥ २२

भूशर्करा शाल्मली च श्लक्ष्णचूर्णीकृतास्समाः ।
दध्ना पिण्डीकृता देयाः करिणां **कटवर्धनाः** ॥ २३

एलाप्रियङ्गुकुटजहरिताळमनश्शिलाः ।
त्रिफलाकुष्ठधान्याकरामठाः सर्पकञ्चुकः ॥ २४

आखुविद्वेषि हिंस्रा च मुस्ताचित्रकसैन्धवम् ।
वरी रसोनो धुत्तूरस्त्रिवृता च विचूर्णिताः ॥ २५

एतैर्वर्तिस्तथा वस्तिः प्रलेपश्च कटे कृतः ।
प्रयुक्तोऽयं यथायोगं करिणां **कटशोधनः** ॥ २६

पारावतशकृद्धिङ्गु वर्तिर्वातप्रशान्तये ।
यवमध्यप्रमाणं तु मुहूर्तस्थितिमर्हति ॥ २७

चित्रकश्च तथा दूर्वा घोण्टामूलमथापि वा ।
चूतश्च तैः कृतं चूर्णं भेदनं मधुतैलयुक् ॥ २८

गुडस्तैलं पुरश्शुण्ठी कृष्णा मधुकसंयुता ।
षडङ्गमेतद्दातव्यं मदभेदनवर्धनम् ॥ २९

अर्कशिग्रुरसोनश्च कदम्बस्तु मरीचकम् ।
पद्माटः सुरसाह्वा च गुडूची च करञ्जकः । ३०

पञ्चकं च समैरेतैः चूर्णितैर्दधिमिश्रितैः ।
पिण्डोऽयं मदवृद्ध्यै स्यादिक्षुक्षीरघृतान्वितः ॥ ३१

केतकी शिग्रु सुरसा बलाबालमुशीरकम् ।
सिद्धकः पूतिको रम्भा कबन्धा मुस्तकाञ्चनैः ॥ ३२

चूर्णितैश्च समैः श्लक्ष्णैः मधुतैलसमन्वितैः ।
दत्तैः प्रवर्तते गन्धः सिन्धुराणां मदाम्भसि ॥ ३३

पिप्पली मरिचं शुण्ठी मर्कटीफलमेव च ।
तैलेन कटलेपोऽयं करिणः कोपयेद्भृशम् ॥ ३४

राजिका शिग्रुमूलं च फाणिज्जं पिप्पलीकणा ।
नागरं बीजपूरेण पिण्डोऽयं **कोपदीपनः** ।
पूर्वेद्युस्ते विधातव्याः कोपदीपनकारकाः ॥ ३५

॥ इति मदाद्युत्पादनौषधप्रयोगः समाप्तः ॥



## ॥ अथ समदगजारोहणकालः ॥



पूर्वावस्थासु तिसृषु चान्तिमासु तिसृष्वपि ।
नारोहेत्तमथारोहेन्मध्यमासु तिसृष्वपि ॥ १

पूर्वासु गौरवात्सर्वकर्माहो न भवेद्गजः ।
चेतोभ्रंशादवस्थासु पश्चात्कर्म करोति न ॥ २

मध्यमासु लघुत्वं च जवः कर्मसु योग्यता ।
मत्तोऽप्याधोरणवशो यस्मान्नागः प्रवर्तते ॥ ३

तस्मादेव महाराज मध्यावस्थमनेकपम् ।
आरोहेत्तदवस्था हि जयाय रतये भवेत् ॥ ४

॥ इति समदगजारोहणकालः ॥



## ॥ अथ मदचिकित्साविधिः ॥

—— o ——

उपक्रमेदवस्थासु नवस्वपि मतङ्गजान् ।
औदकानि विचित्राणि मृदूनि हरितानि च ॥ १

यवसानि प्रशस्तानि शालिभूरीणि सर्वदा ।
सद्यःकृत्तं च यवसं मेदस्थं पललं हितम् ॥ २

इक्षवः कबळादीनि कदळीकेतकीमुखाः ।
एकेनाध्यासनं पांसु पङ्कच्छाद्यनिवारणम् ॥ ३

एकान्तस्थापनं स्थानं शीतशीताम्बुसेचितम् ।
पूर्वासंभूतदेशेषु वासः पोताद्यदर्शनम् ॥ ४

द्राक्षामधूकमधुकसिताखर्जूरगर्भितम् ।
कबळं प्रावणीयं च गुञ्जावल्यादिकानि च ॥ ५

बिसोत्पलमृणाळानि मोदका सशितं घृतम् ।
उत्कारिका वेशवारो घृताढ्यं मुद्गभोजनम् ॥ ६

अभ्यङ्गभोजनं कोशलेपनं साम्यधातुता ।
ह्रदे शिशिरपानीये द्विस्त्रिर्वाऽप्यवगाहनम् ॥ ७

आरक्षा स्यादङ्कुशादिघातनप्रविकर्षणैः ।
उपलालनमत्यर्थमुदमन्थादिदापनम् ॥ ८

मृदुश्च शय्यासंवेशश्चन्द्रिकाप्रतिपादनम ।
तथैवानतिनिर्बन्धो बन्धनं सार्वकालिकम् ॥ ९

विशेषात्सर्वजन्तूनां हननेष्व(च्छा)निवारणम् ।
शुद्धकोष्ठस्य नागस्य कारयेदङ्गसेवनम् ॥ १०

विरक्तस्नेहितः पूर्वं दीप्ताग्निर्दीपनौषधैः ।
योगज्ञस्तं भिषक्प्राज्ञो बृंहयेद्यवमादिभिः ।
स्यान्निवर्तनपर्यन्तं क्रियेह कथिता बुधैः ॥ ११

तेजस्वी बलसहितो जवेन युक्तो
नीताच्छच्छविरपि पूर्णसर्वधातुः ।
अत्युग्रस्थिरतरसर्वगात्रबन्धः
सन्दिष्टः (स खलु गजो मदप्रमुक्तः) ॥ १२

॥ इति मदचिकित्साविधिः संपूर्णः ॥

# ॥ अथ गजक्षेत्रलक्षणम् ॥

---o---

हस्तस्तु प्रथमं क्षेत्रं द्वितीयं वदनं तथा ।
तृतीयं दन्तयोर्युग्मं चतुर्थं शिर उच्यते ॥ १

पञ्चमं नयने चापि षष्ठं कर्ण उदाहृतः ।
ग्रीवा तु सप्तमं क्षेत्रं गात्रमष्टममुच्यते ॥ २

उरश्च नवमं ज्ञेयं कायश्च दशमं भवेत् ।
तथैवैकादशं मेढ्रं द्वादशं चापरद्वयम् ॥ ३

अष्टमक्षेत्रपर्यन्तं पूर्वकायमिहोच्यते ।
नवमं दशमं क्षेत्रं मध्यकायं प्रकीर्तितम् ॥ ४

एकादशं द्वादशं चाप्यपरं कायमीरितम् ।
दशा दशशरत्प्रोक्ता **दशद्वादशमासिका** ॥ ५

एकैकस्मिन्नपि क्षेत्रे फलं स्याद्दशवार्षिकम् ।
दशाक्षेत्रविभागेन लक्षणानुगुणं यतः (फलम) ।
मर्त्यास्स्वफलभोक्तारः नागा भर्तुः फलप्रदाः ॥ ६

॥ इति गजक्षेत्रलक्षणं समाप्तम् ॥



## ॥ अथ गजमूल्यनिर्णयः ॥

—o—

सर्वदेवमया नागाः तस्मादङ्गमहीपते ।
एतावदित्येव मूल्यमेषां वक्तुं न युज्यते ॥ १

क्रेतुर्विक्रेतुरुभयोस्सम्मतं मूल्यमुत्तमम ।
एकस्यासम्मतं मध्यं उभयोरधमं स्मृतम ॥ २

सर्वलक्षणसंपन्न एको वा भामसंभवः ।
कृत्स्नामपि महीं दत्वा ग्राह्यो गजा बुभूपता ॥ ३

मन्दं वा मन्दभद्रं वा भद्रमन्दमथापि वा ।
मृगगात्रापरं वापि शुद्धलक्षणसंयुतम ॥ ४

जवनं शुद्धपादं च महादोषविवर्जितम् ।
करदन्ताक्षिकुम्भस्तु शुभैर्युक्तं मतङ्गजम ॥ ५

शुभच्छायं शुभनखं गृह्णीयात्पूर्णमूल्यतः ।
गर्भिणीं नैव गृह्णीयात्सपोतां चापि धेनुकाम् ॥ ६

भग्नैकदन्तं गृह्णीयाद्भग्नैकाङ्गं च वारणम ।
अर्धेनांशेन मूल्यस्य प्रेरकप्रेषणाय तु ॥ ७

नष्टैकनयनं नागं भिन्नहस्ताग्रवालधिम् ।
भरणाय तु भागाणां गृह्णीयादर्धमूल्यतः ॥ ८

छिन्नाग्रकर्णं गृह्णीयान्नागं मूल्यार्धभागतः ।
भग्नदन्तद्वयं भग्नगात्रद्वन्द्वमथापि वा ॥ ९

भग्नापरद्वयं नागं गृह्णीयात्पादमूल्यतः ।
चतुर्भागेन मूल्यस्य महादोषाश्रितं गजम् ॥ १०

त्यजेदादाय नाशाय देशे वैरिमहीभुजाम् ।
विकृताङ्गमराळं चाप्यत्यराळादिकं गजम ॥ ११

अर्धमूल्येन संगृह्य त्वरिदेशं च प्रेपयेत ।
शालायां नैव बध्नीयादेकाहमपि तान्गजान ॥ १२

छायाहीनं च कुब्जं च पैशाचं रोमकूर्चकम ।
कचावृतशरीरं च गृह्णीयादर्धमूल्यतः ॥ १३

अरीणां देशनाशाय त्वरितं प्रेषयेच्च तान् ।
सर्वलक्षणयुक्तोऽपि पादहीनो मतङ्गजः ।
अर्धनाग इति प्रोक्तः वर्जनीयो महीभुजा ॥ १४

॥ इति गजमूल्यनिर्णयस्समाप्तः ॥

## ॥ अथ दन्तच्छेदभेषजम् ॥

---o---

मधूच्छिष्टं च लाक्षा च माषचूर्णं तथैव च ।
श्लक्ष्णवालुकया चैव सह सर्जरसेन च ॥ १

समभागानि सर्वाणि गुडेन सह पाचयेत् ।
लेपं समन्ततः कृत्वा दन्तकोशं प्रवेशयेत ॥ २

यष्टीमधुकल्कोघ्रौ च मधूच्छिष्टं घृतेन च ।
अनेन तैलयुक्तेन सम्यक् सिद्धेन बुद्धिमान् ॥ ३

लेपयेत सुखोष्णेन दन्तौ सान्द्रेण हस्तिनः ।
मृदुभिश्चर्मकोशैश्च दृढैस्संच्छादयेन्मुखम् ॥ ४

प्रवाळमणिमुक्तादिवज्रवैडूर्यचित्रिताः ।
यथावद्गुणयुक्तेषु पूजार्हेषु च हस्तिषु ॥ ५

प्रतिमोक्षा विधातव्या यथाशास्त्रं प्रकीर्तिताः ।
यदि रक्तप्रवृत्तिः स्यात्सुषिरो वा विधीयते (पिदृश्यते) ।
तस्य शान्त्यर्थमेवात्र पुनर्दन्तं न कल्पयेत् ॥ ६

॥ इति दन्तच्छेदभेषजं समाप्तम् ॥



## ॥ अथ गजव्याधिचिकित्सा ॥

—— o ——

व्याधियुक्तस्य नागस्य वक्ष्ये तथ्यं चिकित्सितम् ।
आदौ रोगं परीक्षेत अङ्गमस्थास्त्रगाश्रितम ॥ १

नामभिर्बहुभिर्युक्तो जन्मन्येव च यो भवेत ।
ज्वरो नरेषु विख्यातः पाकलस्तु च हस्तिषु ॥ २

अभितापस्तुरङ्गेषु षोरको गलभेष्वरो ।
उष्ट्रेष्वलसकः प्रोक्तो गोषु प्रोक्तस्तथा ज्वरः ॥ ३

अभिको दन्दशूकेषु हारिद्रो महिषेष्वपि ।
अजाविके प्रलेपः स्यान्मृगरोगो मृगेष्वपि ॥ ४

पक्षपातश्शकुन्तेषु मत्स्येष्विन्द्रमदाभिधः ।
गुल्मेषु ग्रन्थिको ज्योतिर्बानस्त्योषधीषु च ॥ ५

पुष्पेषु पर्वतः प्रोक्तो रूपको नलिनीष्वपि ।
धान्येषु चूर्णकः ख्यातः कोद्रवेषु ललः स्मृतः ॥ ६

शाकेषु केसुर्भूमीषु ऊषरोऽप्सु च नीलिका ।
अमीभिर्नामभिर्यो वै ज्वर एको निगद्यते ॥ ७

विहाय मानवानन्ये त्वां मोक्तुं न हीश्वरः ।
पाकलस्य ततश्चास्य चिकित्सा नैव दृश्यते ॥ ८

अन्तर्धातुं पुरा व्याप्य बहिः पश्चात्प्रकाशते ।
दुश्चिकित्स्यस्ततश्चासौ पाकलो मृत्युदायकः ॥ ९

आयामैर्बहुभिर्यस्माच्चिकित्सा नास्य वर्णिता ।
सुवहा सुरसा दारु मुस्ता कुटन्नटकम् ॥ १०

मधु शीर्षविडङ्गौ च भाङ्गी सिद्धार्थकद्वयम् ।
मूलकं पञ्चकोलं च करञ्जद्वितयं तथा ॥ ११

महान्ति पञ्चमूलानि कफवातप्रशान्तये ।
गडूची पर्णिकायुग्मं द्वे मेदे जीवकर्षभौ ॥ १२

काकोली च सुगन्धा च विदारी च शतावरी ।
वातपित्तभवान्रोगानशेषानामजन्मनः ॥ १३

चूर्णं कल्कः कषायो वा रोगौघं हन्ति निश्चितम् ।
पटोलपाठाकुष्ठानि निम्बधान्यमृता विषा ॥ १४

धान्यकं पर्पटं तिक्तवत्सकं कफपित्तजित् ।
हिङ्गु सौवर्चलं शुण्ठी गुडं शूलप्रशान्तये ॥ १५

त्र्यूषणेनाञ्जनं वाक्ष्णोरशुण्ठ्या केवलयापि वा ।
अश्वगन्धा कणा रात्रिः क्रिमिघ्नो रसपञ्चकम् ॥ १६

पृथक् पृथक् पलान्यष्टावरिष्टो मुष्टिमात्रतः ।
पञ्चभिर्लवणैर्युक्तो योगोऽयं हन्ति मारुतम् ॥ १७

मूत्रकृच्छ्रमथाध्मानं शूलं चापि व्यपोहति ।
कुटजं शृङ्गवेरं च यवक्षारं च चित्रकम् ॥ १८

पूतिद्वयं च सिद्धार्थं विडङ्गातिविषा वनः ।
पिप्पली पिप्पलीमूलं रजनी शिग्रुकुष्ठकम् ॥ १९

सिन्धुजातं च हिङ्गुश्च चूर्णितो गोमयान्वितः ।
योगोऽयं जाठरस्याग्नेः करिणां दीपनः परः ॥ २०

सामवायुं हिनस्त्याशु सामवातोद्भवा रुजः ।
सैन्धवं जीरकं दन्ती शृङ्गिवेरं फलत्रयम् ॥ २१

करञ्जद्वितयं कृष्णा पटोलं निम्बपल्लवाः ।
ज्योतिष्मती गडूची च वचा चेति सुचूर्णिताः ॥ २२

पिण्डो मृद्गोहदं हन्ति वह्निमाशु करोति च ।
त्रिवृदर्कः स्नुही दन्ती नीली लवणपञ्चकम् ॥ २३

ब्राह्मी च श्वेतमूलं च कम्पाध्मानविनाशनम् ।
पाठापटोलकुष्ठानि निम्बभूनिम्बपर्पटम् ॥ २४

ज्योतिष्मती स्नुही वासा चव्यग्रन्थिकशिग्रुकम् ।
वचा कट्फलकोषाणि चित्रकं बृहतीफलम् ॥ २५

निम्बा दुरालभा रात्रिः त्रि(वृता)त्रिफला तथा ।
त्रिकटुश्च त्रायमाणा पौष्करं गजपिप्पली ॥ २६

धातकी चेति चूर्णोऽयं मधुना कण्ठरोगनुत् ।
सैन्धवं नागरं कुष्ठं वचा शिग्रु निशाद्वयम् ॥ २७

सिद्धार्थकयवक्षारौ सर्वमेकत्र चूर्णयेत् ।
दध्ना विलोडितं कोष्णं कफवातजशोफजित् ॥ २८

स्वेदं च कारयेच्छोफे प्रवाञ्छकृन्मा(न्त्रे) यथोचितम् ।
शोफे विघटिते पक्वे क्षिनिम्बी सैन्धवान्विता ॥ २९

क्षेपणीया प्रयत्नेन व्रणान्तः पूयशान्तये ।
शुष्यत्यसृक् च पक्वे च जाते सद्यः क्षतेऽपि च ॥ ३०

घृतमाक्षिकचूर्णं तत् विधातव्यं दिनत्रयम् ।
तिला निम्बस्य पत्राणि रजनी चेति पेषितम् ॥ ३१

मधुयुक्तं व्रणे शस्तं शोधनं रोपणं परम् ।
कतकस्य फलं लोध्रं मधुकं चन्दनं घनः ॥ ३२

प्रपौण्डरीकं मञ्जिष्ठा उशीरं वालकं तथा ।
एभिर्विरचिता वर्तिश्चूर्णमाश्च्योतनं तथा ॥ ३३

सर्वेषामक्षिरोगाणां शम्यते नामजन्मनाम् ।
क्षीरद्रुमाणां निकाथे त्रिवृतानि क्षिपेदनु ॥ ३४

त्रिफलामञ्जनं लाक्षां लोध्रसिन्दूरगुग्गुलम् ।
भल्लातरजनीघोण्टा फल्गुका क्षीरिसैन्धवम् ॥ ३५

सौराष्ट्रिकाञ्जनं चैव रसं सर्जसमुद्भवम् ।
प्रवेष्टं चेति सञ्चूर्ण्य क्वाथे संचूर्णयेत्ततः ॥ ३६

दर्व्या विमर्दयेत्तज्ज्ञः शनैर्मृद्वग्निना ततः ।
लेहयेत्तद्घनीभूतं निश्चलं तच्च लेपयेत् ।
द्विपानां गळबन्धार्थं कल्पयेत्सुविचक्षणः ॥ ३७

॥ इति गजव्याधिचिकित्सा समाप्ता ॥

# ॥ अथ बालपोषणविधिः ॥

—o—

क्रीडार्थं बालकाश्चापि गृह्यन्ते राजभिः क्वचित् ।
तेषां मातृवियुक्तानां पोषणं रक्षणं तथा ॥ १

व्याधिनिग्रहणं चापि कर्तव्यं प्रत्यहं ध्रुवम् ।
शान्तिकैः पौष्टिकैर्होमैर्बलिदानैर्विशेषतः ॥ २

प्रायश्चित्तैश्च रक्षोघ्नैस्तेषां रक्षां समाचरेत् ।
सर्पिःक्षीरमधुयुतं दद्यात्पानं सफाणितम् ॥ ३

बीजोदकानि हरितमृदूनि यवसानि च ।
मृणालमुत्पलं चेक्षुः शृङ्गाटककशेरुके ॥ ४

शालूकं मत्स्यण्डिका चैतैर्भिर्युक्तं प्रदापयेत् ।
मत्स्यण्डिकां शर्करां च पिप्पलीचूर्णमेव च ॥ ५

नवनीतं च संयोज्य प्रदद्याद्बालकाय च ।
उत्कारिकां क्षीरपक्वां सर्पिस्स्निग्धां सशर्कराम् ॥ ६

मरीचिपिप्पलीचूर्णसंसृष्टां भोजयेत्तथा ।
लवणं च सुरां तेषां तृणान्यपि च वर्जयेत् ॥ ७

चतुर्थे दिवसे सर्वसेकं कार्यं च सर्पिषा ।
तृतीयायां चतुर्थ्यां वा वशायां प्रेषयेच्च तम् ॥ ८

दद्याद्वसन्ते बालानां सल्लकीबिसकेतकान् ।
ग्रीष्मेषु कदलीकाण्डमाम्रेक्षुयवपर्पटान् ॥ ९

प्रावृषि प्लक्षखर्जूरीवेणुपत्रप्रियङ्गुकान् ।
शरदीक्षुकुशाश्वत्थदूर्वाकाशबिसाङ्कुरान् ॥ १०

हेमन्तेऽप्यरिमेदाम्लजम्बूकम्बुकशेरुकान् ।
शरद्ग्रीष्मवसन्तेषु सघृतं पायसं हितम् ॥ ११

क्षीरकुल्माषसर्प्यृद्धं वर्षासु हितमोदनम् ।
हिमयोरामपातार्थं सतैलसरसैन्धवम् ॥ १२

प्रस्थद्वयं बालकानां आढकं हितमोदनम् ।
अर्धद्रोणं हि तेषां तु कलभानां च युक्तितः ॥ १३

बालान्संरक्षयेद्यस्तु स्वपुत्रानिव बुद्धिमान् ।
स राजा विजयी नित्यं पुत्रपौत्रैश्च वर्धते ॥ १४

॥ इति बालपोषणविधिस्समाप्तः ॥

# ॥ अथ मन्दादिगजोत्पत्तिकालः ॥

——o——

भद्राः कृतयुगे जाताः त्रेतायां मन्दजातयः ।
द्वापरे मृगजात्याश्च कलौ सङ्कीर्णजातयः ॥ १

मृगजात्याः शरत्काले निदाघसमयेऽपि वा ।
हेमन्ते शिशिरे चैव मन्दजात्या मतङ्गजाः ॥ २

वसन्ते भद्रजातीयाः वर्षासु च मतङ्गजाः ।
शरद्धेमन्तयोर्मध्ये गजान्मन्दमृगान्विदुः ॥ ३

मन्दभद्रा वसन्तस्य शिशिरस्य च मध्यतः ।
मधु हेमन्तयो(निदाघयो)र्मध्ये भद्रमन्दश्च जायते ॥ ४

ग्रीष्मवर्षान्तरे चापि जातान् भद्रमृगान्विदुः ।
मृगभद्राश्च जायन्ते शरद्वर्षान्तरे गजाः ॥ ५

(मृगमन्दाश्च जायन्ते हेमन्तशिशिरान्तरे ।)
ऋतुसन्धिषु सर्वेषु निन्दिताः कृतनिश्चयाः ॥ ६

पूर्वाह्णे श्लेष्मसंसृष्टाः मध्याह्ने पित्तमिश्रिताः ।
वातिकास्त्वपराह्णेजाः एवं कालविभागजाः ॥ ७

सामा - ब्धि - गर्भ - सुमनः - कन्या - मधु - त्रिभेदतः ।
षड्विधा वारणानां तु संभवाः परिकीर्तिताः ॥ ८

॥ इति गजोत्पत्तिकालः समाप्तः ॥



## ॥ अथ गजचिकित्सार्थकसंज्ञापरिभाषादिविधिः ॥

रसाः स्वाद्वम्ललवणकटुतिक्तकषायकाः ।
षट् द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः ॥ १

रसैराद्यैस्त्रिभिश्चान्त्यैः कफवातौ मरुत्कफौ ।
यातौ वृद्धिक्षयं पित्तं त्रिभिराद्यात्परैः परः ॥ २

षड्रसा ये महीपाल आहारविधिमाश्रिताः ।
तेषां विशेषं वक्ष्यामि यथातथ्यं तु दन्तिनाम् ॥ ३

कषायं मधुरं शीतं पित्तघ्नं तिक्तमेव च ।
कट्वम्लं लवणं चोष्णं तथा पित्तप्रकोपनम् ॥ ४

कषायं कटुकं तिक्तं रूक्षं चानिलकोपनम् ।
अम्लमुष्णं च लवणं स्निग्धं वातं निवर्तयेत् ॥ ५

अम्लमुष्णं च लवणं स्निग्धं च कफवर्धनम् ।
तिक्तं च कटुकं चैव रूक्षं च कफनाशनम् ॥ ६

मधुराम्लकषायाणां लवणस्य तथैव च ।
दद्यादरत्नी पलिकं दन्तिने प्रथमं विधौ ॥ ७

कटुकं च कषायं च तिक्तं च द्विगुणं च तत ।
भागं विन्द्यात् क्रमः कार्यः यावत्सम्यक् प्रतिष्ठितः ॥ ८

स्थितसात्म्यस्य नागस्य परिशुद्धमुखस्य च ।
पलानि मधुरः पिण्डः षष्टिर्देया विजानता ॥ ९

तिक्ताभिः पञ्चभिर्हीनः दशभिः कटुको नृप ।
षष्टिरेव कषायस्य लवणस्य तथैव च ॥ १०

सप्तहस्ताय दातव्यो हीनो हीनाय दन्तिने ।
विज्ञेयो विंशतिपलः कबलस्तु प्रमाणतः ॥ ११

ज्ञेयमौषधवर्गाणां प्रमाणं पिण्डवत्प्रभो ।
मात्रया हीनया द्रव्यं विकारं न विवर्तयेत् ॥ १२

अधिकं कुरुते दोषं वारणस्य महीपते ।
तस्मादग्निबलं कालं शरीरं प्रकृतिं वयः ॥ १३

सात्म्यं सत्वं च विज्ञाय भिषक् भेषजमाचरेत् ।
योगद्वयं **राजपुत्रः** अमृतोपममब्रवीत ॥ १४

प्रतीकारस्य कालोऽभिनयः प्रतिनयस्तथा ।
शय्याभिगमनः कालोऽभिनयः परिकीर्तितः ॥ १५

सुप्तोत्थितः प्रतिनयः कालः प्रोक्तो मनीषिभिः ।
पटनं चाटनं चेति तावेवाधारणा जगुः ॥ १६

दीपनीयान्यौषधानि दद्यात्कालद्वयेऽपि च ।
बृंहणं तु प्रतिनये कृमिघ्नं कर्शनं तथा ॥ १७

गजाश्वयोश्च यद्भोज्यं **तद्द्विधा** परिकीर्तितम् ।
समाग्निस्समदोषश्च समधातुमलक्रियः ॥ १८

प्रसन्नेन्द्रियचित्तात्मा **स्वस्थ** इत्युच्यते बुधैः ।
त्रिंशत्पलस्तु प्रथमः मध्यमः पञ्चविंशतिः ॥ १९

विंशत्पलो जघन्यस्तु कवलस्समुदाहृतः ।
व्याधितस्य ह्यौषधस्य पिण्डं विंशत्पलं स्मृतम् ॥ २०

स्वस्थस्य तु दशपलं कबळं त्वौषधस्य तु ।
विभज्य षट्सु कालेषु दातव्यं स्याद्भिषग्वरैः ॥ २१

रूक्षदेहं स्नेहयित्वा स्नेहैर्दद्यादथौषधम् ।
जलस्योपरि वा पूर्वं दीपनीयं प्रदापयेत् ॥ २२

व्याधितस्य व्याधिमुखे दोषस्य तु बलाबलम् ।
भिषक् सम्यक् निरूप्याथ भेषजानि प्रदापयेत् ॥ २३

अथोत्तमस्य वयसा समासेः करिणो भिषक् ।
दद्यात्त्रिंशत्पलं पिण्डं पादसु कालेषु भागशः ॥ २४

दद्यात्त्रिंशत्पलं पिण्डं न्यूनं दद्याद्यथोचितम् ।
तीक्ष्णाग्नेर्दीपनीयानि न्यूनं दद्याद्धिताय वै ॥ २५

त्रिंशत्संवत्सरादूर्ध्वं यावत्सप्ततिवत्सरम् ।
स उत्तमवया ज्ञेयः चतुर्विंशतिवत्सरात् ॥ २६

त्रिंशत्संवत्सरान्तं तु वयसा मध्यमो मतः ।
दशसंवत्सराद्यावत् चतुर्विंशतिवत्सरम् ॥ २७

सोऽधमो वयसा ज्ञेयः वृद्धस्सप्ततिवत्सरात् ।
वृद्धस्यौषधपिण्डानि न्यूनं दद्यात्सदैव हि ॥ २८

उत्तमान्मध्यमस्यापि मध्यमादधमस्य च ।
दद्यादौषधपिण्डानि न्यूनान्येव यथाबलम् ॥ २९

विंशत्संवत्सरादूर्ध्वं यावत्सप्ततिवत्सरम् ।
मदकबळं धूपं च लेपनं च प्रकीर्तितम् ॥ ३०

व्यायामनित्या यवसैः पुष्टा मांसविवर्धिताः ।
विषया प्रीतमनसः कार्या नित्यं मतङ्गजाः ॥ ३१

व्यायामात्कर्मसामर्थ्यं यवसात् पुष्टिरेव च ।
मांसाद्बलं मांसवृद्धिः सौमनस्यं तु भोजनात् ॥ ३२

सौमनस्याद्भवेद्दोषधातूनां साम्यमेव च ।
धातूनामपि चैतेषां साम्यमारोग्यमुच्यते ॥ ३३

यस्साम्यगुणसंपन्नः समाग्निस्समधातुकः ।
प्रसन्नेन्द्रियचित्तश्च स स्वस्थ इति कथ्यते ।
स्वस्थस्य न प्रदातव्यं भेषजं दोषनाशनम् ॥ ३४

॥ इति गजचिकित्सार्थकसंज्ञापरिभाषादिविधिः समाप्तः ॥

## ॥ अथ गजाहारोपयुक्तपदार्थगुणप्रमाणविधिः ॥

मधूलिकाफलान्यष्टौ सर्षपस्स्यात्प्रमाणतः ।
यवः स्यात्सर्षपान्यष्टौ काकिणी स चतुर्गुणः ॥ १

**माषः** चतस्रः **काकिण्यः** चतुर्माषस्तु **शाणकः** ।
**सुवर्णस्तु** चतुश्शाणः **पलं** स्यात्स चतुर्गुणः ॥ २

चतुष्पलो हि कुडुबः प्रस्थः स्यात्स चतुर्गुणः ।
आढकं तेऽपि चत्वारः द्रोणं तु चतुराढकम् ॥ ३

द्रोणाः षोडश **खारी** स्यात् **मानमेतद्धि मागधम्** ।
शेषाणां चैव वक्ष्यामि रसानां शृणु पार्थिव ॥ ४

पञ्च कौडुबकं प्रस्थं रसानामत्र निर्दिशेत् ।
सार्धत्रयोदशपलं तोयप्रस्थं विनिर्दिशेत् ॥ ५

भेषजानां दशपलं द्रोणे चूर्णस्य दापयेत् ।
द्रोणे तु विंशतिपलं भेषजानां विधीयते ॥ ६

स्नेहप्रमाणं द्रोणे तु स्नेहमर्धाढकं भवेत् ।
एतदेव प्रमाणं तु नागानामनुवासने ॥ ७

अर्धप्रस्थं तु विज्ञेयं गजानां गात्रसेचने ।
तस्माच्चतुर्गुणः स्नेहः विहितस्सर्वसेचने ॥ ८

मत्तस्य चाण्डकोशस्य म्रक्षणे गैरिकायुतम् ।
नरेन्द्र दन्तिनो देयं घृतस्य कुडुबं भवेत् ॥ ९

मषीचूर्णार्धकुडुबं घृतस्य कुडुबं तथा ।
शिरोभ्यङ्गाय देयं स्यादङ्कुशक्षतशान्तये ॥ १०

दीपतैलेऽपि कुडुबं प्रमाणं विद्धि पार्थिव ।
द्रोणे द्रोणे दशपलं गुडस्य लवणस्य च ॥ ११

भक्तस्नेहप्रमाणं तु द्रोणे द्विप्रस्थमिष्यते ।
मांसैः स्नेहैः रसैस्सार्धं सायाह्ने भोजयेद्गजम् ॥ १२

दध्ना पललसंयुक्तं गुडेन च समन्वितम् ।
पूर्वाह्णे भोजयेन्नागं प्रदीपितमतन्द्रितः ॥ १३

स्नेहेष्वपि विशेषेण घृतं श्रेष्ठतमं स्मृतम् ।
मधुरं शीतवीर्यं च लघु चैवाविदाहि च ॥ १४

हितं वाते च पित्ते च मेदश्शुक्रविवर्धनम् ।
ग्रहिणीदीपनं बल्यं आयुष्यं चक्षुषो हितम् ॥ १५

घृतात्तु नान्यत्पश्यामि भेषजं सर्वदेहिनाम् ।
तत्र ये पित्तला नागाः प्रकृत्या तनवश्च ये ॥ १६

बाला दुर्बलपादाश्च ये च नेत्रातुरा गजाः ।
सर्पिस्तेभ्यः प्रदातव्यं गजा ये च नवग्रहाः ॥ १७

घृतं वर्णरसोपेतं गन्धसंपन्नमेव च ।
बलं वर्णं जवं चैव दन्तान्नागस्य वर्धयेत् ॥ १८

अवस्थितं चिरं यच्चाप्यतिदग्धं सपूतिकम् ।
भवेद्भाजनदुष्टं च क्रिमिभिर्वा समन्वितम् ॥ १९

एवं विधं भोज्यमानो बलान्नागः प्रहीयते ।
बलात्प्रहीयमानस्तु भोजनं नाभिनन्दति ॥ २०

ये पर्यश्रुदृशः कृशाश्च शिशवो धारार्दिताः पित्तळाः
तन्वङ्गास्सतताध्वकर्मविहिताः वृद्धा वनीनिस्सृताः ।
सासृङ्मांसमदक्षयाश्च विवशा ये स्थब्धगात्राश्चिरात्
तेषां सात्म्यतमं हितं घृतमिति ब्रूते **कलिङ्गेश्वरः** ॥ २१

घृतस्यानन्तरं **तैलं** ऋषिभिस्समुदाहृतम् ।
तैलं त्वचां बलकरं लेख(ह)नीयं तिलोद्भवम् ॥ २२

विदाहि चोष्णवीर्यं च कषायं मधुरं तथा ।
वातश्लेष्महरं चैव विपाके कटुकं स्मृतम् ॥ २३

कृमिघ्नं पित्तळं चापि मेदोघ्नं योनिशोधनम् ।
अव्यायामैरुपचिता ये गजास्स्थूलदेहिनः ॥ २४

वातोपद्रवयुक्ताश्च ये वाऽप्यल्पसविक्रमाः ।
ये च वातप्रकृतयः श्लेष्मला ये च वारणाः ॥ २५

बहुशश्चापि सज्जन्ते ये च नाहेन कुञ्जराः ।
सहसा भ्रंशते मांसं येषां चाध्वप्रयोजने ॥ २६

तेषां तैलं प्रदातव्यं ये चापि क्रिमिकाग्निनः ।
धेनुकानां तु सततं तैलमेव विधीयते ॥ २७

तासां हि बहुवातत्वात् वायुः कोष्ठे प्रकुप्यति ।
उत्साहजननं तैलं तेजोबलविवर्धनम् ॥ २८

मर्दितो तेन विधिवत् विधा भुञ्जीत वारणः ।
स्नेहयुक्ता विधियुता सम्यक् बृंहयति द्विपम् ॥ २९

वर्धयेज्जाठराग्निं च भुक्तं जीर्णीकरिष्यति ।
यद्वाजने भवेत् क्लिन्नं क्रिमिभिर्दूषितं च यत् ॥ ३०

यद्वा कषायसंयुक्तं यच्चाम्लरसदूषितम् ।
अतिसारकरं ह्येतत् वैवर्ण्यकरमेव च ॥ ३१

एवंविधं वर्जयेत्तु तैलं नागस्य पार्थिव ।
वसापि वातशमनी दन्तिनां मधुरा स्मृता ॥ ३२

वृष्या विपाके मधुरा बलवर्णप्रसादिनी ।
स्रोतोविघाते विहिता मन्यास्तंभे गळग्रहे ॥ ३३

भग्नस्फुटितभिन्नानां गात्ररोगेषु चोत्तमा ।
**मज्जा** बल्या विशेषेण वातपित्तविनाशिनी ॥ ३४

कफं मेदश्च शुक्रं च वृद्धिं नयति दन्तिनाम् ।
उष्णैश्चैवोष्णवीर्यश्च गुरुश्चापि प्रकीर्तितः ॥ ३५

वातरोगहरो वृष्यः स्रोतसां परिशोधनः ।
तैलार्धं तु घृते मात्रा तदर्धं त्रिवृतो भवेत् ॥ ३६

मज्जायाश्च वसायाश्च मात्रा प्रायोगिकी मता ।
भक्ते तैलप्रमाणेन श्रेष्ठां मात्रां प्रयोजयेत् ॥ ३७

पादहीनां तथा मध्यां अर्धहीनां कनीयसीम् ।
एष एव क्रमो वृद्धेरासमाप्तेर्विधीयते ॥ ३८

उरःक्षतानां भग्नानां **वसां मज्जां** च दापयेत् ।
उत्तमाय च नागाय देयं द्वात्रिंशदाढकम् ॥ ३९

अष्टौ च विंशतिश्चैव मध्यमाय नगाधिप ।
चतुर्विंशत्याढकं तु दापयेच्च कनीयसे ॥ ४०

सप्ताहं पाययेत्स्नेहं उत्तमाग्निं मतङ्गजम् ।
मध्यमाग्निं च पञ्चाहं मन्दाग्निं त्र्यहमेव वा ॥ ४१

विरिञ्चते ततः सम्यक् कोष्ठं चास्य विशुध्यति ।
कृसरो दुग्धपिण्याकयुक्तो दधिसमन्वितः ॥ ४२

प्रदेयो बृह्मणार्थाय प्रतिपानं च दन्तिने ।
प्रपन्ना पञ्चलवणैः युक्ता त्रिकटुकेन च ॥ ४३

मृगाणां महिषादीनां जाङ्गलोदकपक्षिणाम् ।
**मांसस्य** पलपञ्चाशत् स्याद्द्रोणे परिसंख्यया ॥ ४४

वराहोरभ्रमहिषशशाजहरिणा मृगाः ।
स्वस्थवृत्तेः प्रदातव्या रसार्थे दन्तिनां नृप ॥ ४५

वराहमहिषादीनां कुक्कुटानां खगोष्ट्रयोः ।
श्वाविधशल्यकगोधानां गोसृगालाविमांसजान् ॥ ४६

ग्रासान् युक्ताम्ललवणान् मातुलिङ्गरसान्वितान् ।
अर्धाढकं प्रत्यरत्नि रसं नागाय दापयेत् ॥ ४७

अनूपं जाङ्गलं चैव यच्चासृक् जलचारिणाम् ।
कषायं जाङ्गलं मांसं अम्लमानूपजं स्मृतम् ॥ ४८

एषां बालस्य यन्मांसं मृदुत्वात् श्लेष्मलं तु तत् ।
विषेण घातितं यत्तु यच्च व्याधिहतं भवेत् ॥ ४९

अद्धा कुणपगन्धं च मांसं गजान्विगर्हितम् ।
एषां स्वस्थस्य यन्मांसं यौवनस्थस्य देहिनः ॥ ५०

तस्मिन् हितो वेशवारः रसो वा दन्तिनां नृप ।
रसे त्रिकटुकस्यैव सङ्करार्थं (संस्कारार्थं) पलं स्मृतम् ॥ ५१

स्नेहस्य कुडुवं द्रोणे दध्नस्त्वर्धाढकं भवेत् ।
मर्दितां तेन विधिवत् विधां भुञ्जीत वारणः ॥ ५२

प्रत्यरत्नि यवसस्य च भारं
तण्डुलस्य चतुराढकमुक्तम् ।
स्नेहमष्ट(र्ध)कुडुबं लवणस्य
स्युः पलानि दश चापि गुडस्य ॥ ५३

अन्यच्च

अरत्नौ तण्डुलद्रोणं स्नेहस्यार्धाढकं स्मृतम् ।
गुडस्य लवणस्यापि पृथक् दशपलं तथा ॥ ५४

विधिवद्विहितायां तु विधायां रससम्भवः ।
ततो रक्तं ततो मांसं ततो मेदस्ततोऽस्थि च ॥ ५५

ततो मज्जा ततश्शुक्लं ततो हर्षस्ततो मदः ।
ततः श्रीर्विजयः कान्तिः तेजश्चारोग्यमेव च ।
एवमन्यांश्च विविधान् विदधाति विधा गुणान् ॥ ५६

विधां प्रयच्छेत् द्विरदाय नित्यं
न चापि तैलं न घृतं न दुग्धम् ।
न चापि मांसं न रसं न मद्यं
अन्नेन शुद्धेन सुखी तृणैश्च ॥ ५७

उषसि यवसतैलं मात्रयाऽर्धाढकं स्यात्
प्रवरवयसि मध्ये तच्चतुर्भागहीनम् ।
अधमवयसि चैतत् तत्त्रिभागोनमुक्तं
बलमदजवकारि व्याधिविध्वंसनं च ॥ ५८

गजानां बलहीनानां कृशानां दुर्बलाग्निनाम् ।
वाताभिभूतकायानां अभिघातकफात्मनाम् ॥ ५९

**कफे न यवसं देयं** गजानां हितमिच्छता ।
सर्वधातुविवृद्ध्यर्थं सर्वदोषप्रशान्तये ॥ ६०

वातकोपनकाले तु दद्यादेतत् विशेषतः ।
प्रातरेव गजे भुक्ते गुणवत् तृणतैलकम् ॥ ६१

भक्तस्नेहसमः स्नेहः मोदकेषु विधीयते ।
मोदकेष्वपि नागानां इमे शास्त्रविनिश्चिताः ॥ ६२

मोदकार्थं महीपाल पिष्टमाढकमिष्यते ।
विडङ्गाक्षिब(ङ्क्षीर)कुल्माषमाषगोधूमसमसंस्कृताः ॥ ६३

भूयोऽङ्गराजः पप्रच्छ पालकाप्यं महामुनिम् ।
चतुर्विधं त्वया प्रोक्तमाहारं वक्तुमर्हसि ॥ ६४

भोज्यं भक्ष्यं च लेह्यं च पेयं चेति चतुर्विधम् ।
असंस्कृतं संस्कृतं च द्विविधं भोज्यमुच्यते ॥ ६५

तत्र संस्कृतमेवाग्रे प्रवक्ष्यामि यथाक्रमम् ।
अन्नं मांसरसस्नेहदधिक्षीरसमायुतम् ॥ ६६

**संस्कृतं** चेति कथितमसंस्कृतमतः शृणु ।
तैस्तै(रसै)र्विवर्जितं त्वन्नं तण्डुलाश्चाप्य**संस्कृतम्** ॥ ६७

कबळं पल्लवं वृक्षभङ्गास्त्वङ्मूलमेव च ।
तृणानि चेति जानीयात् **भक्ष्यमेवं** विशेषतः ॥ ६८

**पेयान्यपि** च वक्ष्यामि यानि नागाः पिबन्ति वै ।
यवागू क्षीरमुन्मन्थो रसाश्च विविधा नृप ॥ ६९

स्नेहास्सर्वे महीपाल संस्कृतासंस्कृतास्तु ये ।
यमकं त्रिवृतं चैव महास्नेहं च पार्थिव ॥ ७०

**तैलं घृतं च यमकं** वसा च त्रिवृतं स्मृतम् ।
स्नेहास्सर्वे च मांसानि मेदो मज्जा रसस्तथा ॥ ७१

वसा चैत्यकृतः पक्वं महास्नेह इति स्मृतः ।
प्रोक्तान्येतानि **पेयानि लेह्यान्यपि** निबोध मे ॥ ७२

उत्कारिका वेशवारो मोदकाश्च नराधिप ।
**उत्कारिकां** प्रवक्ष्यामि तां मे निगदतः शृणु ॥ ७३

प्रियालुपद्मखर्जूरमधूकपनसस्य च ।
पलानां सूक्ष्मचूर्णानि घृतेन सह पाचयेत ॥ ७४

मत्स्यण्डिकाशर्कराभ्यां प्रदद्यात्तं यथाक्रमम ।
सूक्ष्मगोधूमचूर्णानि पिप्पली तण्डुलास्तथा ॥ ७५

घृतं गुडं च संयोज्य पाचयेन्मतिमान्भिषक् ।
सक्तवश्च सुघृष्टा वै ते चार्द्रं च कशेरुकम् ॥ ७६

तथा पुष्करमूलानि सूक्ष्मचूर्णानि कारयेत् ।
घृतेन मरिचैर्वापि गुडैर्वापि विपाचयेत् ॥ ७७

एतद्दद्यात्तु नागेभ्यः कायाग्निबलवर्धनम् ।
अतःपरं प्रवक्ष्यामि **वेशवारं** नृपोत्तम ॥ ७८

मांसं सहास्थि सुस्विन्नं श्लक्ष्णं दृषदि पेषयेत् ।
पिप्पली शुण्ठि मरिचैः सर्पिर्गुडसमन्वितम् ॥ ७९

एकस्थं पाचयेत्सम्यक् **वेशवारं** महामते ।
प्रावृषि ग्रीष्मशरदोः स्विन्नं सौवीरकेण च ॥ ८०

शेषेष्वृतुषु तोयेन सुस्विन्नमवतारयेत ।
एवं मदविवृद्ध्यर्थं अमदानां मदावहम् ।
वेशवारं भिषक् प्राज्ञः यथावदुपलक्षयेत् ॥ ८१

॥ इति गजाहारोपयुक्तपदार्थगुणप्रमाणविधिः समाप्तः ॥



## ॥ अथ भक्ष्यपेयादिपदार्थगुणदोषविधिः ॥

---o---

**तैलं** तोयेन संयुक्तं वातरोगहरं परम् ।
**सर्पिः** क्षीरेण संयुक्तं पित्तघ्नं बलपोषणम् ॥ १

वसया योजिता **मज्जा** भग्नाङ्गःक्षतशान्तिकृत् ।
सर्वं बलकरं **मांसं** बृंहणं चाग्निवर्धनम् ॥ २

**वारुणी** दीपयत्यग्निं जनयत्यङ्गलाघवम् ।
मनःप्रसादनी वृष्या बृंहणी वीर्यवर्धनी ॥ ३

क्रिमिघ्ना तैलसंयुक्ता श्लेष्माणं च निरस्यति ।
हिताऽऽध्मानप्रदुष्टाय तथा चानिलरोगिणे ॥ ४

क्षुभिताविद्धवंशाय विच्युतभ्रष्टवक्षसे ।
**मदिरा** द्राक्षया युक्ता हिता स्नेहेन चान्विता ॥ ५

दूराध्वगमनश्रान्ता वधबन्धार्दिताश्च ये ।
सहसा ये च विहिता गजाश्मेयानकर्मसु ॥ ६

तेभ्यो गुडयुता देया दन्तिभ्यो मदिरा सदा ।
बलवत्संनिपातेषु निहता ये प्रतिद्विपैः ॥ ७

पञ्चभिर्वारुणी युक्ता रसैर्लवणवर्जिता ।
तेभ्यो गजेभ्यो दातव्या यथान्यायं महीपते ॥ ८

वर्तानाहेऽग्निदौर्बल्ये मृत्तिकानाह एव च ।
मदिरा दन्तिनं पथ्या लवणैस्सह योजिता ॥ ९

श्रान्ता ये तृषिता ये च भिन्नमूत्रपुरीषिणः ।
अरोचकार्दिता ये स्युरामाशयविकारिणः ॥ १०

तेभ्यः कादम्बरी देया वारणेभ्यो विशेषतः ।
अग्निना दूषितं यच्च यच्च भाजनदूषितम् ॥ ११

तैस्तु दोषैरुपेतं तु मद्यं नित्यं निषेधयेत् ।
यत्स्वच्छतैलवर्णं स्यात् घृतमण्डनिभं च यत् ॥ १२

करवीरोत्पलांभोजतुल्यगन्धिरसस्फुटम् ।
आस्वादे तिक्तमधुरं प्रकृतिस्थं बलान्वितम् ॥ १३

ईदृशं पाययेन्मद्यं दुष्टदोषविवर्जितम् ।
स्वस्थवृत्तस्य नागस्य प्रतिपानं सुरा हिता ॥ १४

भाराध्ववधबन्धादिश्रान्तानां सगुडा हिता ।
भक्तपादप्रमाणेन योगं मद्यस्य कारयेत् ॥ १५

यदा मद्यं पिबेन्नागः द्राक्षया सह योजितम् ।
तदा द्राक्षा प्रदातव्या भक्तषोडशभागिकी ॥ १६

**क्षीरस्य गुणदोषास्तु** यथावत्संप्रवक्ष्यते ।
गव्यं माहिषमाजं वा दधियुक्तं पयो हितम् ॥ १७

शीतलं मधुरं स्निग्धं जीवनं बृंहणं हितम् ।
आयुष्यं चैव वृष्यं च पयः परमभेषजम् ॥ १८

ग्राहिणीदीपनं चैव सद्यो बलकरं तथा ।
माधुर्यस्निग्धभावाभ्यां वातरोगविनाशनम् ॥ १९

शैत्यान्माधुर्यभावाच्च पित्तप्रशमनं भृशम् ।
तदेव रक्तपित्तस्य भेषजं च कफे हितम् ॥ २०

संप्रोक्तप्राणिमांसेषु ससर्पिष्कं पयो हितम् ।
तेन सञ्जायते नागः प्रसन्नत्वक्तनूरुहः ॥ २१

स्थिरोपचितमांसश्च प्रसन्नेन्द्रियमानसः ।
यत्सवार्यम्लमिश्रं च रात्रिपर्युषितं च यत् ॥ २२

भाजनोपहतं यत्तत्सद्यो दोषान्प्रकोपयेत् ।
तृष्णां छर्दिं च जनयेत् ग्रहिणीं रूपयत्यपि ॥ २३

सद्यस्कृतमसंसृष्टं पयः सर्वगुणान्वितम् ।
वातेष्वपि विकारेषु क्षीरपानं प्रशस्यते ॥ २४

मन्यास्तम्भे हनुस्तम्भे छर्दिते सप्रतानके ।
शिरस्तापे सास्थिभङ्गे म्लाने सूने तथैव च ॥ २५

कोष्ठशूलेषु सर्वेषु योनिशूले हितं पयः ।
अतिसृष्टमदक्षीणा वयोऽतीताः कृशाश्च ये ॥ २६

कर्मप्रबन्धा मत्ताश्च दुर्बला ये गतासवः ।
दग्धाश्च कवलैस्तीक्ष्णैः बहुशोपद्रुताश्च ये ॥ २७

पित्तोपसृष्टाश्मगदाः तेभ्यः क्षीरं प्रदापयेत ।
शमयत्यभितापं च दीप्ताग्निश्च भवेन्नृप ॥ २८

सम्यग्वातं च जयति छविश्चाम्य प्रसीदति ।
अग्नौ पयसो मानं आढकीयमुदाहृतम् ॥ २९

येषां श्लेष्म च पित्तं च मारुतश्चापि कुप्यति ।
पूर्वोक्तेन प्रमाणेन **दधि** तेभ्यः प्रदापयेत् ॥ ३

आम्लं तदम्लपान च विदाहि गुरु चाच्यत ।
कफयोनि तदार्क्रेदि पित्तयोनिस्तथैव च ॥ ३१

श्लक्ष्णं सुगन्धि स्निग्धं च सद्यः प्राणविवर्धनम् ।
मधुरं दीपनं चैव वृष्यं बलकरं तथा ॥ ३२

विपाके कटुकं चैव सन्धानं कृमिनाशनम् ।
अचिन्त्यवीर्यं गुणतः सर्वरोगहरं **दधि** ॥ ३३

कर्शनं शीतवीर्यं च रूक्षं मधुकरं स्मृतम् ।
सन्धानं लेखनं चैव कफपित्तहरं **मधु** ॥ ३४

*छर्दिक्लेशातिसारेषु विषदुष्टेषु हस्तिषु ।*
कफमांसविवृद्धेषु दापयेत्सततं मधु ॥ ३५

श्रान्ता धिष्ण्याध्वगमनैः पत्तिका व्याधिताश्च ये ।
ये च दुर्मनसो नागाः तेषा**मिक्षुः** शुभावहः ॥ ३६

मधुराः पित्तरोगेषु हिताः मदविवर्धनाः ।
शुक्लवृद्धिकराश्चैव क्षीणधातुविवर्धनाः ॥ ३७

मेदसो वर्धनाश्चैव मांसशोणितवर्धनाः ।
दातव्यास्त्विक्षवो ग्रीष्मे त्र्यहं शरदि वा पुनः ॥ ३८

वर्षासु सप्तरात्रेण वसन्ते दशरात्रतः ।
हेमन्ते शीतकाले च दद्यात्पक्षावसानतः ॥ ३९

दद्यात् ज्येष्ठाय करिणे पञ्चैवेक्षुशतानि वै ।
शतानि त्रीण्यथार्धं च मध्यमाय च दन्तिने ॥ ४०

करिणे द्विशतार्धं च जघन्याय प्रदापयेत् ।
अतो गुणान्प्रवक्ष्यामि राजन् **गात्रादिसेचने** ॥ ४१

गुरुबन्धादिभिः क्लेशैः विरुद्धपरिवर्तनात् ।
विषमे कर्दमे निम्ने सलिले चापि धावनात् ॥ ४२

स्खलनैरभिघाताद्यैस्स्तंभो गात्रेषु जायते ।
विषमाहारशयनैर्गमनाद्वापि सङ्कटे ॥ ४३

दुस्स्थानादपि मातङ्गा जायन्ते गात्ररोगिणः ।
तेषां तैलेन सिक्तानि गात्राणि वसयाऽपि वा ।
मृदुभूतानि जायन्ते श्वयथुश्चापि शाम्यति ॥ ४४

न भेदमायान्ति नखास्तलं च
न क्षीयते नाध्वनि पाददाहः ।
भवन्ति केशा रुचिराश्च दृष्टिः
न हीयते सन्ततपादसेकात् ॥ ४५

स्थाने तत्त्रिफलाचूर्णं तैलेन तलसेकतः ।
स्रावभेदक्षयास्फोटरहितास्स्युस्स्थिरास्तलाः । ४६

त्वग्दोषबन्धवधजिह्मणशोषगात्र-
स्तम्भादिजित् क्षपितशीतसमीरकोपः ।
सक्थ्यङ्गमार्दवकरो लघुब्रह्मणश्च
स्निग्धत्वसत्वबलसौख्यकृदङ्गसेकः ॥ ४७

शिरःक्षतानि शाम्यन्ति स्निग्धकेशा भवन्ति च ।
स्रोतोदृष्टयोरकालुष्यं शिरस्सेके कृते सति ॥ ४८

स्थिरवेष्टौ दृढौ दन्तौ स्निग्धौ व्यथाविवर्जितौ ।
दन्ताघातसमर्थौ च दन्ताभ्यङ्गेन नित्यशः ॥ ४९

मूत्रक्षरणतो नित्यं कोशो मत्तस्य पच्यते ।
गैरिकस्य पलेनास्य सदा साज्येन सेचनम् ॥ ५०

अभीक्ष्णं साधु पश्यन्ति घृताभ्यङ्गेन दन्तिनः ।
अक्षिरोगा न जायन्ते स्थिरदृष्टिश्च जायते ॥ ५१

द्रुमाणां मन्ततः सेको फलार्थं जायते यथा ।
तथा स्नेहपरीषेकः वारणानां बलावहः ॥ ५२

वृश्चिकाः कृकलासाश्च तथैव गृहगोधिकाः ।
छर्दनाः क्रिमयोऽन्ये च बहवो वारणाऽहिताः ॥ ५३

रात्रौ विनिस्सृता धर्मे भुजङ्गाश्च महाविषाः ।
प्रविशेयुर्गजागारं भक्षयित्वा च तान्गजः ॥ ५४

तीव्रां बाधामवाप्नोति मरणं चाधिगच्छति ।
दीपे ज्वलति वै रात्रौ सुखं जानाति तान्गजः ॥ ५५

तस्माद्गजहितार्थं तु दीपं प्रज्वालयेन्निशि ।
गजागारे प्रदीपार्थं स्यात्तैलं कुडुबं नृप ॥ ५६

**लवणं** दीपयत्यग्निं पचत्याहारमेव च ।
कृमिकोष्ठप्रशमनं वातरोगनिबर्हणम् ॥ ५७

लवणं भक्षयित्वा तु जलं पिबति वारणः ।
शोणितस्य जलं योनिः तेजसा तच्च रज्यते ॥ ५८

यद्वदिन्धनसंभारं कृत्वा वह्निः प्रयोजितः ।
भस्मीकरोति लवणं तद्वत्पचति भोजनम् ।
अहोरात्रचितास्तस्य दोषा नश्यन्त्यसंशयम् ॥ ५९

जरयति बहुभुक्तं शोधनं मूत्रवस्ति-
कृमिहृदनिलहारि व्याधिविध्वंसनं च ।
अरुचिशमनमाशु क्लेदनं वारणानां
लवणममृततुल्यं पथ्यधर्मावतारः ॥ ६०

पूर्वाह्णभुक्ते लवणं वर्जयेद्दोषवर्धनम् ।
अपराह्णे तु लवणं दीपनं दोषनाशनम् ॥ ६१

भुक्तस्य पश्चाल्लवणं दीपनं दोषनाशनम् ।
पलानि लवणस्याथ दशाष्टौ सप्त पञ्च च ॥ ६२

भद्रे मन्दे मृगे मिश्रे हेमन्तेऽरत्नितो विदुः ।
शरद्ग्रीष्मेऽर्धमंशेन दद्याद्वर्षवसन्तयोः ॥ ६३

कफवातात्मिके पश्चान्मधौ तद्विमयोरपि ।
वृक्षभङ्गलतागुल्मतृणसस्यादिभिर्गुरुः ॥ ६४

विधायोगश्च सुतरां लवणेन विना कृतः ।
अमन्त्र इव यज्ञाग्निः बहुदोषकरो भवेत् ॥ ६५

कोपयत्यखिलं दोषं अजीर्णं जनयत्यपि ।
यत्कुर्यान्मृत्तिका भुक्ता तथैवालवणा विधा ॥ ६६

रोमकं सैन्धवं चैव बिडं सौवर्चलं तथा ।
सुवर्चिका यवक्षारं सामुद्रमथ चोद्भिदम् ॥ ६७

अष्टावेतानि करिणां लवणानि यथाविधि ।
दद्याद्द्रोणे दशपलं सामुद्रस्यैव भूमिप ॥ ६८

शेषाणां पञ्चपलिकमरत्नौ विद्धि पार्थिव ।
व्रीहिशालिषाष्टिकास्तु श्रेष्ठास्स्युर्यवगोधुमौ ॥ ६९

मध्यमौ चाधमा मुद्गमाषकोद्रवकङ्गवः ।
शीतं संमृदितं शुद्धं पिण्डं बलकरं भवेत् ॥ ७०

ओदनस्य विदुः पिण्डं तण्डुलप्रस्थसाधितम ।
आमा विदग्धा दग्धातिसिद्धात्युष्णातिशीतळा ॥ ७१

हीनाधिका विधा राजन् करिणां दोषकारिणी ।
आमाऽतिसारं विदग्धा हृद्रोगं बलसंक्षयम् ॥ ७२

दग्धा प्रवाहिकां चातिसिद्धाऽत्युष्णा च पित्तकम् ।
शीता वायुमतृप्तिं च हीना व्यापदमन्तिमा ॥ ७३

मृदान्विता तु छर्दिं चाप्यरुचिं जनयेद्विधा ।
अस्नेहलवणां यत्नाद्विधां विषमिव त्यजेत् ॥ ७४

यवसप्र(प्री)तिपूर्णाय पीतस्नाताय दन्तिने ।
या विधा दीयते राजन् सा विधार्थाय कल्पते ॥ ७५

गजाश्वयोश्च यद्भोज्यं तद्विधा परिकीर्त्यते ।
व्यायामनित्या यवसैः पुष्टा मांसविवर्धनाः ॥ ७६

विधया प्रीतमनसः कर्तव्यास्सामसंभवाः ।
व्यायामात्कर्मसामर्थ्यं यवसात्पुष्टिरेव च ॥ ७७

मांसाद्बलं मांसवृद्धिः सौमनस्यं तु भोजनात् ।
सौमनस्याद्भवेद्दोषधातूनां सौम्यमेव च ॥ ७८

म(ब)लानामपि चैतेषां सौम्यमारोग्यमुच्यते ।
हेमन्ते तैलपानं तु वर्षासु च विधीयते ॥ ७९

मज्जां चैव वसां चैव वसन्ते तु प्रदापयेत् ।
शरदि ग्रीष्मकाले च घृतपानं प्रशस्यते ॥ ८०

हेमन्तकाले तु पुनः निदाघसमयेऽपि वा ।
स्नेहपानं तु सफले तृणे शुष्के विवर्जितम ॥ ८१

हेमन्तकाले पीतं तु तैलं सम्यक् न जीर्यते ।
निदाघे तैलपानेन मूर्च्छा तस्योपजायते ॥ ८२

केचिदिच्छन्ति नागस्य स्नेहयुक्तं तु भोजनम् ।
भुक्तस्य चानुपानं च केचिदिच्छन्ति भूमिप ॥ ८३

आर्द्रस्य यवसस्य स्यात्प्रमाणं द्रोणसंमितम् ।
शुष्काणां च लघूनां चाप्याहारं द्विगुणं मतम् ॥ ८४

फलितानां तु धान्यानां अर्धाहारं प्रदापयेत् ।
तेषामेव सगर्भाणां त्रिभागोनं प्रदापयेत ॥ ८५

**तृणं** तृष्णापहं तृप्तिकरं च ग्रहिणीहरम् ।
मनःप्रसादनं दोषत्रयघ्नं रक्तशोधनम् ॥ ८६

तृणं जरयते दोषमुदीर्णमपि हस्तिनः ।
तृणाच्च वर्धते प्राणः तृणात्संभवतीन्द्रियम् ॥ ८७

श्रमग्लानिविचित्तत्वतन्द्री(न्द्य)निन्द्रापहं तृणम् ।
तृणसात्म्यास्तृणप्राणास्तृणाहारा मतङ्गजाः ॥ ८८

**तृणं यदा न खादन्ति यत्नेनापि प्रचोदिताः ।**
**तदा तु व्याधिता नागा ज्ञातव्यास्तु नराधिप ॥ ८९**

सोमादापस्संभवन्ति तृणसञ्चश्च जायते ।
सोमात्मकाश्च मातङ्गा शीतसात्म्या विशेषतः ॥ ९०

तस्माद्यदा व्रजेदर्कः पर्यायेणोत्तरां दिशम् ।
तृणहैन्यात्प्रहीयन्ते हीनप्राणा भवन्ति च ॥ ९१

दक्षिणायनसंस्थे तु सूर्ये सुखपरायणाः ।
आस्वादयन्ति निष्पन्नं तृणं नागा न संशयः ॥ ९२

वीतौषधिरसे काले भास्करस्य गभस्तिभिः ।
तापितानां वारणानां प्राणसारं क्षयं व्रजेत् ॥ ९३

प्राणसञ्जननार्थं तु शीतं सर्वं प्रयोजयेत् ।
वर्षासु जलजं नेष्टं स्थलजं यवसं हितम् ॥ ९४

